## भवताम् अध्ययनस्य अनुकूलतायै संस्कृतभारत्या सज्जीकृताः सन्ति अन्येऽपि बहवः ग्रन्थाः । यथा -

**भाषाभ्यासाय -**

- अभ्यासपुस्तकम् • विभक्तिवल्लरी • शतृशानजन्तमञ्जरी • अभ्यासदर्शिनी
- सम्भाषणसोपानम् • कालबोधिनी • णत्वणिजन्तम् • सन्देशसंस्कृतम्
- सम्भाषणसंस्कृतम् (ध्वनिमुद्रिकासहितम्) • प्रयोगाः (ध्वनिमुद्रिकासहितम्)

**भाषाज्ञानवर्धनाय -**

- समासः • सन्धिः • कारकम् • शुद्धिकौमुदी • भाषापाकः • इड्व्यवस्था

**विचारशक्तिवर्धनाय -**

- परिष्कारः • संस्कृतभारती • परिवर्तनम् • सङ्क्रमणम्
- उत्तिष्ठत मा स्वप्त • सप्तदशी • पूर्णाङ्कं प्रति • ज्ञानदीप्तिः

**संस्कारवर्धनाय -**

- सुगन्धः • पञ्चतन्त्रकथाः • शृण्वन्तु कथाम् एकाम्
- प्रेरणादीपः • हे मनः ! समाश्वसितु

**प्रेरणावर्धनाय -**

- Pride of India (आङ्ग्लभाषया) • भारतीयविज्ञानपरम्परा
- भुवमानीता भगवद्भाषा • युगावतारः ।

**मनोविनोदाय भाषाभ्यासाय च -**

- सार्थः • धर्मश्रीः • ऋणविमुक्तिः ।

**अभिनयाय -**

- नवरूपकम् • कविकोपकलापः • जागरूको भव ।

**श्रवणसुखाय भाषाभ्यासाय च ध्वनिमुद्रिकाः -**

- गीतसंस्कृतम् • गेयसंस्कृतम् • शिशुसंस्कृतम् • हितोपदेशकथाः
- श्रीकृष्णजननम् • संस्कृतोज्जीवनम् ।

---

**पुस्तकानि ध्वनिमुद्रिकाश्च प्राप्तुं भवतां केन्द्रसंयोजकस्य सम्पर्कं कुर्वन्तु ।**

प्रकाशनम्
संस्कृतभारती
मातामन्दिरगली, झण्डेवाला
नवदेहली - 110 055



मुखपुटविन्यासः - सुधाकर दर्बे
चित्राणि - सतीशः एलेसर

आन्तरसज्जता - शान्तला
साहाय्यम् - हरिणाक्षी

प्रथममुद्रणम् - जुलै, २००८, प्रतिकृतयः - ५०००
द्वितीयमुद्रणम् - जनवरी, २०१०, प्रतिकृतयः - ५०००

मुद्रणम् - ग्राफिक वर्ल्ड, 1659
दरिया गंज, नई दिल्ली- 02
ISBN - 978-81-87276-35-5

GEETAAPRAVEHSAH (PRATHAMABHAAGAH)
A text book to learn Samskrit through Bhagavadgeetaa written by various authors.
Publisher - Samskrita Bharati, Mata Mandir Gali, Jhandewala, New Delhi - 110 055. Ph. - (011) 23517689.
Website - www.samskrita-bharati.org
Pages - 216, First Print - July - 2008 / Second Print - January - 2010
Printed at- Graphic World, 1659, Darya Ganj, New Delhi-02
graphicworld@rediffmail.com

# गीताप्रवेशः

## प्रथमभागः

**मार्गदर्शकसमितिः**

चमू कृष्णशास्त्री

जनार्दन हेगडे

**सम्पादकसमितिः**

डा. विश्वासः

डा. चान्दकिरण सलूजा

डा. विठ्ठल भावे

चारुहासिनी भावे

शिवराम भट्टः

गणेश पण्डितः

रणजित् को.

एम्. वि. मोहनः

विनायक हेगडे

रामकृष्ण पेजत्तायः

परिशोधकः –

डा . एन्. लक्ष्मीनारायणभट्टः

---

संस्कृतभारती

नवदेहली

प्रियाः संस्कृताभ्यासिनः !

भारतस्य सनातनसंस्कृतेः सारसर्वस्वभूता अस्ति श्रीमद्भगवद्गीता । गीतायाः अध्ययनं प्रत्येकं भारतीयस्य कर्तव्यम् इति मन्यन्ते मनीषिणः । लोके तादृशाः बहवः दृश्यन्ते ये गीतायाः पारायणं दैनन्दिनजीवनस्य किञ्चन अङ्गं मतवन्तः सन्ति ।

भगवता श्रीकृष्णेन गीता उपदिष्टा अस्ति संस्कृतभाषया । अतः गीतायाः मूलार्थम् अवगन्तुं संस्कृतभाषायाः ज्ञानम् अत्यन्तम् अनिवार्यं भवति । तस्याः गीतायाः माध्यमेन संस्कृतभाषायाः परिचयं प्राप्तुं परिकल्पितं नूतनं सोपानमेव अयं गीताप्रवेशः नाम ।

आकर्षकेण विधिना संस्कृतस्य अध्ययनं कर्तुं संस्कृतभारत्या इतःपूर्वं भाषाप्रवेशस्य प्रथमभागः द्वितीयभागश्च सज्जीकृतौ । तयोः साहाय्येन बहवः संस्कृतासक्ताः एतावता संस्कृतभाषायाः प्राथमिकं परिचयं प्राप्तवन्तः सन्ति । तेषां प्रगताध्ययनाय उपकारकः भवति अयं गीताप्रवेशः । भाषाप्रवेशः यैः नाधीतः तादृशाः अपि संस्कृतभाषायाः ईषत्परिचयवन्तः एतं गीताप्रवेशं स्वीकर्तुम् अर्हन्ति एव ।

गीताप्रवेशस्य अध्ययनस्य आरम्भात्पूर्वम् एते अंशाः भवतां मनसि भवन्तु -

- संस्कृतभारत्या प्रशिक्षितस्य शिक्षकस्य मार्गदर्शने अध्ययनम् अत्यधिकलाभाय भवेत् ।
- भगवद्गीतायाः काचित् मूला प्रतिकृतिः अध्ययनावसरे भवतां निकटे भवतु । गोरखपुरस्थस्य गीता-मुद्रणालयस्य (गीताप्रेस्, गोरखपुर) २३ संख्याकं संस्करणं चेत् उत्तमम् । यतः अस्मिन् पुस्तके श्लोकसंख्यादिकं तत्रत्यमेव अनुसृतम् अस्ति ।
- अत्र प्रतिपाठं प्रतिपाठबिन्दु बोधयितुमपि प्रायेण गीतायाः शब्दाः वाक्यानि च उदाहृतानि सन्ति । मध्ये मध्ये मूलग्रन्थे तानि वाक्यानि परिशीलयन्तु ।
- पाठेषु मध्ये मध्ये अतिरिक्तविवरणानि पादटिप्पणीरूपेण दत्तानि सन्ति । अन्ते अन्यदपि परिशिष्टं दत्तमस्ति ।
- अधिकज्ञानाय पठितुं योग्यानां पुस्तकानां नामानि तत्र तत्र निर्दिष्टानि सन्ति । तानि पुस्तकानि संस्कृतभारती-कार्यालयेभ्यः प्राप्तुं शक्यन्ते ।
- प्रतिपाठं केचन अभ्यासाः निर्दिष्टाः सन्ति । केन्द्रशिक्षकस्य मार्गदर्शनेन नियततया तान् अभ्यासान् कुर्वन्तु । सन्देहे सति शिक्षकात् मार्गदर्शनं प्राप्नुवन्तु । (पुस्तकस्य अन्ते तेषाम् अभ्यासानाम् उत्तराणि मुद्रितानि सन्ति । अत्यावश्यकं चेत् तानि द्रष्टुम् अर्हन्ति ।)
- प्रगताध्ययनाय गीताप्रवेशस्य द्वितीयभागम् अवश्यं पठन्तु ।

भवतां संस्कृताध्ययनं सफलं भवतु । गीताचार्यः सर्वान् अनुगृह्णातु इति आशास्य विरम्यते ।

✍ सम्पादकः

## अनुक्रमणिका


| पाठसंख्या पाठः | पृष्ठसंख्या |
|---|---|
| १. नारायणं नमस्कृत्य (सन्धिः) | १ |
| २. सञ्जय उवाच (स्वरसन्धिः) | ११ |
| ३. अपकारिणामपि उपकारः (व्यञ्जनसन्धिः) | २७ |
| ४. अयिनस्टायिन उवाच (विसर्गसन्धिः) | ४७ |
| ५. महाविद्यालये भगवद्गीता (णत्वम्) | ६३ |
| ६. मम माता देवता (णिजन्तम् - १) | ७२ |
| ७. गुरोः स्थानम् (णिजन्तम् - २) | ८० |
| ८. जातस्य हि ध्रुवो मृत्युः (क्तप्रत्ययः) | ८९ |
| ९. ब्रह्मार्पणम् (सतिसप्तमी) | १०१ |
| १०. ततो दुःखतरं किम् ? (तरप्-तमप्) | ११० |
| ११. कोऽयं रामेश्वरः ? (समासः) | ११९ |
| १२. आदिमः ऋषिः (तत्पुरुषसमासः) | १२४ |
| १३. अहङ्कारविमूढात्मा (बहुव्रीहिसमासः) | १३५ |
| १४. रहस्यमिदमुच्यते (द्वन्द्वसमासः) | १४० |
| १५. बाणभूषणसंवादः (कर्मणि शानच्) | १४८ |
| १६. भाषणपरिपाटी (कृत्प्रत्ययाः) | १५४ |
| १७. ज्ञानं विज्ञानसहितम् (सन्नन्ताः) | १६२ |
| १८. कर्मण्येवाधिकारस्ते (कारकम्) | १६८ |
| १९. युक्ताहारविहारस्य (तद्धितप्रत्ययाः) | १८४ |
| २०. अन्वयरचना | १९२ |
| परिशिष्टम् | १९९ |
| उत्तराणि | २०० |

## शिक्षकेभ्यः सूचनाः

- ⇨ भाषाप्रवेशस्य प्रथमभागे द्वितीयभागे च ये पाठबिन्दवः स्वीकृताः ततः अग्रिमाः पाठबिन्दवः अत्र पाठनाय स्वीकृताः सन्ति। प्रत्येकं पाठबिन्दोः उपस्थापनाय अभ्यासाय च प्रायेण गीतातः एव उदाहरणानि स्वीकृतानि सन्ति।
- ⇨ सन्धि-समास-कारकादिषु सर्वेऽपि अंशाः अत्र न परिचायिताः। अत्यन्तं मुख्यभूताः व्यवहारे नितराम् अपेक्षिताश्च अंशाः एव उक्ताः सन्ति। अत्र अनुक्ताः बहवः अंशाः सन्ति इति न विस्मर्तव्यम्। अतः पाठनावसरे प्रत्येकं व्याकरणांशस्य इयत्ता एतावती एव इति न वक्तव्यम्।
- ⇨ गीतायाः भाषागताः अंशाः एव अत्र विशेषतया स्वीकृताः सन्ति। पाठेषु तत्र तत्र प्रासङ्गिकतया केषाञ्चन गीताश्लोकानां सामान्यः अर्थः प्रदत्तः अस्ति। विशेषार्थस्य अवगमनाय व्याख्यानानि द्रष्टव्यानि भवन्ति।
- ⇨ माहेश्वरसूत्राणां परिचयः पाठे प्रदत्तः अस्ति। प्रासङ्गिकतया तत्र तत्र पाणिनि-सूत्राणि उदाहृतानि सन्ति। तत्पुरतः (पा.सू.......) इति सूत्रसंख्यापि दर्शिता अस्ति। आवश्यकतानुगुणं पाणिनिसूत्राणां वैशिष्ट्यं प्रदर्शितं चेत् महते लाभाय भवेत्।
- ⇨ प्रतिपाठं केचन अभ्यासाः प्रदत्ताः सन्ति। यदि शक्यं कक्ष्यायामेव ते अभ्यासाः कार्यन्ताम्। अन्यथा गृहपाठरूपेण लेखितुं सूचयितुमपि शक्यम्। परन्तु पश्चात् तैः लिखितस्य परिशीलनम् अवश्यं कर्तव्यम्।
- ⇨ प्रतिदिनं कक्ष्यायाः आरम्भात्पूर्वं गीतायाः केषाञ्चन श्लोकानाम् (एकस्य अध्यायस्य वा) उच्चैः वाचनं महते लाभाय कल्पते।

# १. नारायणं नमस्कृत्य...

सन्धिः

एतं पाठं सावधानम् उच्चैः पठत –

**नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।**
**देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥**

श्रीमद्भगवद्गीता महाभारते अन्तर्गतः कश्चन भागः । भीष्मपर्वणि **एष भागोऽस्ति** (एषः भागः अस्ति) । भगवन्तं नारायणं, मनुष्येषु श्रेष्ठम् अर्जुनं, देवीं सरस्वतीं व्यासमहर्षिं च नमस्कृत्य ततः 'जयः' इति ग्रन्थस्य वाचनं करणीयम् **इत्येतस्य** (इति एतस्य) श्लोकस्य अर्थः । **एष भारते** (एषः भारते) **प्राचीनकालादागतः** (प्राचीनकालात् आगतः) सम्प्रदायः । **महाभारतस्यैव** (महाभारतस्य एव) पूर्वं जयः इति नाम आसीत् । गच्छता कालेन बहूनां कथोपकथादीनां योजनेन **स एव** (सः एव) **महद्रूपं** (महत् रूपं) प्राप्य **महाभारतमिति** (महाभारतम् इति) विख्यातम् अभवत् ।

महाभारते अष्टादश **इत्यस्याः** (इति अस्याः) संख्यायाः अतीव प्राशस्त्यम् अस्ति । कटपयादिसंख्याक्रमेण 'जय'शब्दः[१] अष्टादशसंख्यां निर्दिशति । महाभारतग्रन्थे अष्टादश पर्वाणि सन्ति । महाभारतयुद्धे अष्टादश अक्षौहिण्यः **युद्धमकुर्वन्** (युद्धम् अकुर्वन्) । युद्धं च प्रवृत्तम् अष्टादश दिनानि यावत् । गीतायाम् अध्यायानां संख्या अपि अष्टादश । तत्रत्याः **अष्टादशाध्यायाः** (अष्टादश अध्यायाः) अपि अस्मान् जीवनमार्गं बोधयन्ति । गीतायाः अध्ययनम् अस्माकं ज्ञानदायकं भवतु ।

*एतस्मिन् पाठे स्थूलाक्षरैः मुद्रितानि पदानि संहितानि[२] सन्ति । आवरणे पदविभागः अपि दर्शितः अस्ति ।*

---

१ परिशिष्टम् – १ पश्यत

२ सन्निकृष्टानि – अर्धमात्राकालेन व्यवहितानि । (वर्णयोः अत्यन्तं सामीप्येन अवस्थितिः संहिता ।)

## अभ्यासः

१. १. प्रश्नानाम् उत्तरं लिखत –

१. श्रीमद्भगवद्गीता कस्मिन् ग्रन्थे अन्तर्गतः भागः ?

_______________________________________________।

२. गीताभागः महाभारतस्य कस्मिन् पर्वणि अस्ति ?

_______________________________________________।

३. मनुष्येषु श्रेष्ठः कः ?

_______________________________________________।

४. महाभारतग्रन्थस्य पूर्वतनं नाम किम् ?

_______________________________________________।

५. बहूनां कथोपकथादीनां योजनेन 'जयः' केन नाम्ना विख्यातम् अभवत् ?

_______________________________________________।

६. महाभारते कस्याः संख्यायाः अतीव प्राशस्त्यम् अस्ति ?

_______________________________________________।

१. २. कति सन्ति इति लिखत –

१. महाभारतग्रन्थे पर्वाणि _______________।
२. महाभारतयुद्धे अक्षौहिण्यः _______________।
३. युद्धदिनानि _______________।
४. गीतायाम् अध्यायानां संख्या _______________।

१. ३. पाठे स्थूलाक्षरैः मुद्रितानि पदानि आवरणे स्थितानि च पदानि यथोदाहरणं रिक्तस्थाने लिखत –

| (सन्धियुक्तानि) | (पदविभागः) |
|---|---|
| **एष भागोऽस्ति** | **एषः भागः अस्ति** |
| _______________ | _______________ |
| _______________ | _______________ |
| _______________ | _______________ |
| _______________ | _______________ |
| _______________ | _______________ |

१. ४. पाठं पठित्वा रिक्तस्थानानि पूरयत –

भगवन्तं नारायणं ________ ________ अर्जुनं देवीं ________ व्यासमहर्षिं च ________ ततः ________ इति ग्रन्थस्य ________ करणीयम्।

१. ५. यथोदाहरणं संयोजयत –

| | |
|---|---|
| १. चैव | नर + उत्तमम् |
| २. नरोत्तमम् | जयम् + उदीरयेत् |
| ३. ततो | सरस्वतीम् |
| ४. जयमुदीरयेत् | देवीम् |
| ५. नारायणं | नरम् |
| ६. सरस्वतीं | नारायणम् |
| ७. नरं | च + एव |
| ८. देवीं | ततः |

१. ६. श्रीमद्भगवद्गीतायाः निम्नलिखितेषु श्लोकेषु स्थूलाक्षरपदानि सावधानं पठत –

१. **पश्यैतां पाण्डुपुत्राणामाचार्य** महतीं चमूम्।<br>व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता॥ (१.३)[१]

२. अपर्याप्तं **तदस्माकं** बलं **भीष्माभिरक्षितम्**।<br>पर्याप्तं **त्विदमेतेषां** बलं **भीमाभिरक्षितम्**॥ (१.१०)

३. अयनेषु च सर्वेषु **यथाभागमवस्थिताः**।<br>**भीष्ममेवाभिरक्षन्तु** भवन्तः सर्व एव हि॥ (१.११)

४. ततः **शङ्खाश्च भेर्यश्च** पणवानकगोमुखाः।<br>**सहसैवाभ्यहन्यन्त** स **शब्दस्तुमुलोऽभवत्**॥ (१.१३)

एतेषु स्थूलाक्षरपदेषु कानि कानि संयुक्तानि सन्ति इति अवगच्छत।

| युक्तानि पदानि | | वियुक्तानि पदानि |
|---|---|---|
| १. पश्यैताम् | = | पश्य + एताम् |
| २. पाण्डुपुत्राणामाचार्य | = | पाण्डुपुत्राणाम् + आचार्य |
| ३. तदस्माकम् | = | तत् + अस्माकम् |
| ४. भीष्माभिरक्षितम् | = | भीष्म + अभिरक्षितम् |
| ५. त्विदमेतेषाम् | = | तु + इदम् + एतेषाम् |
| ६. भीमाभिरक्षितम् | = | भीम + अभिरक्षितम् |

१. अस्मिन् पुस्तके प्रायेण सर्वाणि उदाहरणानि गीतातः उद्धृतानि सन्ति। उद्धृतस्य शब्दस्य पुरतः आवरणे संख्याद्वयं निर्दिष्टम् अस्ति। तत्र प्रथमसंख्या अध्यायस्य, द्वितीया तु श्लोकस्य इति ज्ञेयम्। यथा – (१.३) इत्यस्य प्रथमाध्याये तृतीयः श्लोकः इत्यर्थः।

| | | |
|---|---|---|
| ७. यथाभागमवस्थिताः | = | यथाभागम् + अवस्थिताः |
| ८. भीष्ममेवाभिरक्षन्तु | = | भीष्मम् + एव + अभिरक्षन्तु |
| ९. शङ्खाश्च | = | शङ्खाः + च |
| १०. भेर्यश्च | = | भेर्यः + च |
| ११. सहसैवाभ्यहन्यन्त | = | सहसा + एव + अभि + अहन्यन्त |
| १२. शब्दस्तुमुलोऽभवत् | = | शब्दः + तुमुलः + अभवत् |

अधुना वयं सन्धीनां विषये किञ्चित् ज्ञानं प्राप्नवाम।

## सन्धिः

यत्र आदेशादिकं[1] सम्भवति, तादृशः वर्णयोः अतिशयितः सन्निधिः सन्धिः इति उच्यते।

सन्धिविषये अधिकं ज्ञातुम् आदौ एते विषयाः अस्माभिः ज्ञातव्याः सन्ति –

### अक्षरम् –

श्रवणेन्द्रियग्राह्यम् अक्षरम्। तस्य एव वर्णः इत्यपि नाम।

अक्षरं त्रिविधम् – स्वरः अयोगवाहः व्यञ्जनं च इति।

### स्वरः –

स्वतन्त्रतया उच्चार्यमाणः वर्णः स्वरः। अ इ उ ऋ लृ ए ओ ऐ औ – इत्येते स्वराः।

स्वरः त्रिविधः – ह्रस्वः दीर्घः प्लुतश्च इति।

वर्णोच्चारणकालः मात्रा[2] इति उच्यते।

एकमात्राकालेन उच्चारयितुं योग्यः स्वरः ह्रस्वः। अ इ उ ऋ लृ – एते ह्रस्वाः।

द्विमात्राकालेन उच्चारयितुं योग्यः स्वरः दीर्घः। आ ई ऊ ॠ ए ऐ ओ औ – एते दीर्घाः।

त्रिमात्राकालेन उच्चारयितुं योग्यः स्वरः प्लुतः। अ३ इ३ उ३ ऋ३ लृ३ ए३ ऐ३ ओ३ औ३ – एते प्लुताः। (प्लुताः त्रिमात्राकालेन उच्चार्यन्ते इति बोधयितुं वर्णस्य पुरतः '३' संख्या लिख्यते।)

### अयोगवाहः –

ं अनुस्वारः

ः विसर्गः

ᳵक ᳵख जिह्वामूलीयः – कखाभ्यां पूर्वः अर्धविसर्गसदृशो वर्णः जिह्वामूलीयः।

---

१. ७–पृष्ठं पश्यत

२. मात्रा इति कालविशेषः।

चाषस्तु वदते मात्रां द्विमात्रं त्वेव वायसः।
शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम्॥ *पाणिनीयशिक्षा – ४९*

ᳵप ᳵफ उपध्मानीयः – पफाभ्यां पूर्वः अर्धविसर्गसदृशो वर्णः उपध्मानीयः । ᳵक ᳵख ᳵप ᳵफ – एते चत्वारः अयोगवाहाः ।

### व्यञ्जनम्

अर्धमात्राकालेन उच्चारयितुं योग्यः वर्णः व्यञ्जनम् । तच्च वर्गीयव्यञ्जनम् अवर्गीयव्यञ्जनं च इति द्विविधम् ।

तत्र – क् ख् ग् घ् ङ् (कवर्गः)<br>
च् छ् ज् झ् ञ् (चवर्गः)<br>
ट् ठ् ड् ढ् ण् (टवर्गः)<br>
त् थ् द् ध् न् (तवर्गः)<br>
प् फ् ब् भ् म् (पवर्गः) – एतानि पञ्चविंशतिः (२५) वर्गीयव्यञ्जनानि ।<br>
य् र् ल् व् श् ष् स् ह् – एतानि अष्ट अवर्गीयव्यञ्जनानि ।

सन्धिकार्यादौ सौकर्यार्थं व्यञ्जनानां विभागः अन्यप्रकारेण अपि कृतः अस्ति । ग् घ् ङ् ज् झ् ञ् ड् ढ् ण् द् ध् न् ब् भ् म् ह् य् व् र् ल् – एतानि मृदुव्यञ्जनानि, क् ख् च् छ् ट् ठ् त् थ् प् फ् श् ष् स् – एतानि कर्कशव्यञ्जनानि ।

कवर्गः, चवर्गः, टवर्गः, तवर्गः, पवर्गः च क्रमेण कु चु टु तु पु इति शब्दैः व्याकरणे व्यवहृताः भवन्ति । अतः कु = कवर्गः, चु = चवर्गः, टु = टवर्गः, तु = तवर्गः, पु = पवर्गः इति ज्ञातव्यम् ।

### माहेश्वरसूत्राणि

पाणिनिः भगवतः ईश्वरस्य अनुग्रहात् इमानि सूत्राणि प्राप्य व्याकरणम् अरचयत् ।

| | | | |
|---|---|---|---|
| **१. अइउण्** | **२. ऋलृक्** | **३. एओङ्** | **४. ऐऔच्** |
| **५. हयवरट्** | **६. लण्** | **७. ञमङणनम्** | **८. झभञ्** |
| **९. घढधष्** | **१०. जबगडदश्** | **११. खफछठथचटतव्** | |
| **१२. कपय्** | **१३. शषसर्** | **१४. हल्** | |

एतानि माहेश्वरसूत्राणि इति प्रसिद्धानि । एतानि चतुर्दश सूत्राणि महेश्वरात् आगतानि इति वैयाकरणानां मतम् । एतेषु सूत्रेषु हयवरप्रभृतयः वर्णाः सन्ति । 'ह'कारादिषु 'अ'कारः उच्चारणार्थः । तेन 'हयवर' इत्यनेन ह् य् व् र् – इत्येतेषां वर्णानां ग्रहणं भवति । अयोगवाहाः[१] तु माहेश्वरसूत्रेषु नान्तर्भूताः ।

### प्रत्याहारः

एतेषु चतुर्दशसु माहेश्वरसूत्रेषु अपि स्वररहितम् एकैकं व्यञ्जनम् अन्ते श्रूयते । तेन सह उच्चार्यमाणः आदिमः वर्णः मध्ये वर्तमानानां वर्णानां स्वस्य च बोधकः भवति । यथा – 'अइउण्' इति सूत्रस्थस्य 'इ'कारस्य 'ऋलृक्' इति सूत्रस्थेन अन्तिमव्यञ्जनेन 'क'कारेण सह उच्चारणे 'इक्' इति शब्दः निष्पद्यते । तेन 'इ उ ऋ लृ' इति वर्णाः उपस्थिताः भवन्ति । एवम् उपसंहृत्य व्यवहृतः शब्दः 'प्रत्याहारः' इति व्याकरणे प्रथितः । स्पष्टप्रतिपत्तये केचन प्रत्याहाराः अत्र

१. न विद्यते योगः माहेश्वरसूत्रेषु येषां ते अयोगाः । योगः सम्बन्धः । वहन्तीति वाहाः । प्रयोगं निर्वहन्तीत्यर्थः । अयोगाश्च ते वाहाश्च अयोगवाहाः ।

सविवरणं दर्शिताः सन्ति –

अण् – अ इ उ

अक् – अ इ उ ऋ लृ

यण् – य् व् र् ल्

अच् – सर्वे स्वराः

हल् – सर्वाणि व्यञ्जनानि

अल् – सर्वेऽपि वर्णाः

हश् – मृदुव्यञ्जनानि

खर् – कर्कशव्यञ्जनानि

जश् – वर्गीयतृतीयव्यञ्जनानि

प्रत्याहारेषु विषयद्वयं ज्ञातव्यम् –

१. **सूत्राणाम् अन्ते विद्यमानानां स्वररहितानां व्यञ्जनानां ग्रहणं न भवति ।**
(तेषाम् 'इत्' इति संज्ञा भवति । इत्संज्ञकस्य लोपः भवति ।)
यथा – अक् । अत्र अ इ उ ऋ लृ इत्येतेषां वर्णानां ग्रहणं भवति, न तु णकारककारयोः ग्रहणम् ।

२. **आदिमः वर्णो नाम सूत्रेषु आद्यः वर्णः इति नार्थः । किन्तु अस्माभिः आदिमत्वेन विवक्षितः वर्णः इत्यर्थः ।**
यथा – इक्, यण्, चर् – इत्यादिषु प्रत्याहारेषु इ, य, च इत्येते वर्णाः माहेश्वरसूत्रेषु आदिमाः न सन्ति ।

व्यञ्जनानि प्रायः स्वरैः सह उच्चार्यन्ते ।

यथा –

क् + अ = क | क् + आ = का
क् + इ = कि | क् + ई = की
क् + उ = कु | क् + ऊ = कू
क् + ऋ = कृ | क् + ॠ = कॄ
क् + ए = के | क् + ऐ = कै
क् + ओ = को | क् + औ = कौ
क् + (अ) + ं = कं | क् + (अ) + ः = कः

एतेषां क्रमेण क का कि की कु कू कृ कॄ के कै को कौ कं कः इति वाचनं लोके प्रसिद्धम् अस्ति । एषा ककापङ्क्तिः[1] इति प्रसिद्धा ।

---

१. भट्टिर्नष्टो भारविश्चापि नष्टो भिक्षुर्नष्टो भीमसेनोऽपि नष्टः ।
भुक्कुण्डोऽहं भूपतिस्त्वं हि राजन् भभापङ्क्तावन्तकः सन्निविष्टः ॥ *भोजप्रबन्धः –३१८*

**संयुक्ताक्षरम्** – 'द् र्' इत्येते व्यञ्जने। 'द्र' इत्येतत् संयुक्ताक्षरम्।

स्वरव्यञ्जनयोः सन्निधौ यदा विकारः भवति तदा सन्धिः इति उच्यते। विकारः नाम कस्यचित् वर्णस्य अदर्शनं कस्यचित् अन्यस्य वर्णस्य प्रयोगः वा।

यथा – विनद्य + उच्चैः = विनद्योच्चैः (१.१२) अत्र 'अ उ' इत्येतयोः वर्णयोः सन्निधौ सति तयोः स्थाने ओकारः सम्पन्नः। अयं च विकारः। अतः एषः सन्धिः। किन्तु 'किम् + अकुर्वत = किमकुर्वत' (१.१) अत्र 'म् अ' इति वर्णयोः सन्निधौ सत्यपि कोऽपि विकारः न सम्पन्नः। केवलं म् + अ इत्यनयोः स्थाने म इति लिखितम्। अतः एषः न सन्धिः।

सन्धिः यदा भवति तदा तत्र आदेशः, आगमः लोपः प्रकृतिभावः वा भवति।

१. **आदेशः**

पूर्वं स्थितस्य वर्णस्य स्थाने अन्यस्य वर्णस्य उदयः आदेशः।

एतां प्रक्रियां पश्यत –

यदि + अपि = यद् + इ + अ + पि
= यद् + य् + अ + पि = यद्यपि (१.३८)

अत्र इ वर्णस्य स्थाने य् वर्णः आगतः अस्ति। एषः आदेशः।

२. **आगमः**

वर्णात् पूर्वं परं वा अन्यस्य वर्णस्य उदयः आगमः।

एतां प्रक्रियां पश्यत –

अनिच्छन् + अपि = अनिच्छ + न् + अ + पि
= अनिच्छ + न् + न् + अ + पि = अनिच्छन्नपि (३.३६)

अत्र नकारात्पूर्वम् अपरः नकारः उत्पन्नः अस्ति। एषः आगमः।

३. **लोपः**

वर्णस्य अदर्शनं लोपः।

एतां प्रक्रियां पश्यत – समवेताः + युयुत्सवः = समवेता + ः + युयुत्सवः
= समवेता + युयुत्सवः = समवेता युयुत्सवः (१.१)

अत्र समवेता इत्यतः परस्य विसर्गस्य अदर्शनम्। एषः लोपः।

४. **प्रकृतिभावः**

निमित्ते सत्यपि लोपादेः अभावः प्रकृतिभावः।

यथा – अनादी + उभौ = अनाद् + ई + उ + भौ = अनादी उभौ (१३.१९)

अत्र 'ई उ' एतयोः वर्णयोः सन्धौ यकारस्य उदयः भवेत्, किन्तु न भवति। एषः प्रकृतिभावः।

आदेशः, आगमः, लोपः, प्रकृतिभावः वा यदा भवति तदा तस्य कार्यस्य सन्धिकार्यम् इति व्यवहारः।

## अभ्यासः

१. ७. अधोनिर्दिष्टेषु स्थानेषु आदेशः, आगमः, लोपः, प्रकृतिभावः इत्येतेषु अन्यतमं सन्धिकार्यं भवति। तत् किम् इति पुरतः रिक्ते स्थाने यथोदाहरणं लिखत –

उदा. – आश्चर्यवत् च – आश्चर्यव + त् + च = आश्चर्यव + च् + च = आश्चर्यवच्च (२.२९) **आदेशः**

१. तु इदम् – त् + उ + इ + दम् = त् + व् + इ + दम् = त्विदम् (१.१०) ________

२. प्रहसन् इव – प्रहस + न् + इ + व = प्रहस + न् + न् + इ + व = प्रहसन्निव (२.१०) ________

३. नायकाः मम – नायका + ः + मम = नायका + मम = नायका मम (१.७) ________

४. भ्रमति इव – भ्रमत् + इ + इ + व = भ्रमत् + ई + व = भ्रमतीव (१.३०) ________

५. स्यात् निश्चितम् – स्या + त् + न् + इश्चितम् = स्या + न् +न् + इश्चितम् = स्यान्निश्चितम् (२.७) ________

६. सः कौन्तेयः – स + ः + कौन्तेयः = स + कौन्तेयः = स कौन्तेयः(१.२७) ________

७. यः एनम् – य + ः + एनम् = य + एनम् = य एनम् (२.२१) ________

८. गुरू उत्तिष्ठतः – गुरू + उत्तिष्ठतः = गुरू उत्तिष्ठतः ________

९. अमी आश्रमाः – अमी + आश्रमाः = अमी आश्रमाः ________

१०. पश्य कृष्ण३ + अत्र गोपिकाः नृत्यन्ति = पश्य कृष्ण३ अत्र गोपिकाः नृत्यन्ति ________

११. अहो + अस्माकम् = अहो अस्माकम् ________

१. ८. कस्यचित् अध्यायस्य सप्तमे श्लोके एकोऽपि सन्धिः नास्ति। तं श्लोकम् अन्विष्यत –

१. ९. एतेषु वाक्येषु संहिता अस्ति। परन्तु सन्धिकार्यं नास्ति। तत्रत्यानि पदानि पृथक् पृथक् लिखत –

१. अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन (२.२)

________ + ________ + ________ + ________

२. आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखीन् (१.२६)

________ + ________ + ________ + ________

+ ________ + ________

३. यत्तत्तामसमुच्यते (१८.२५)

________ + ________ + ________ + ________

४. संवादमिममश्रौषमद्भुतम् (१८.७४)

________ + ________ + ________ + ________

५. योगेश्वरात्कृष्णात्साक्षात्कथयतः (१८.७५)

______ + ______ + ______ + ______

**अवधेयम्**

सन्धिकार्यं कदा करणीयम् ? कदा न करणीयम् इति प्रश्नस्य उत्तरम् इदं भवति[१] –

१. एकस्मिन् पदे सन्धिः नित्यं कर्तव्यः । यथा – आविस् + तः = आविष्टः (१.२८)
२. धातूपसर्गयोः सन्धिः नित्यं कर्तव्यः । यथा – उप + अविशत् = उपाविशत् । (१.४७)
३. समासे सन्धिः नित्यं कर्तव्यः । यथा – लाभ + अलाभौ = लाभालाभौ (२.३८)
४. वाक्ये तु सन्धिः विकल्पेन भवति ।

यथा – 'देवदत्तो ग्रामं गच्छति' अत्र सन्धिद्वयं कृतम् –

अ. देवदत्तः + ग्रामम् = देवदत्तो ग्रामम्

आ. ग्रामम् + गच्छति = ग्रामं गच्छति ।

'देवदत्तः ग्रामम् गच्छति' अत्र सन्धिकार्यं न कृतम् ।

सन्धिः त्रिविधः – स्वरसन्धिः (अच्सन्धिः), व्यञ्जनसन्धिः(हल्सन्धिः), विसर्गसन्धिश्च इति ।

१. स्वरसन्धिः – स्वरात् स्वरे परे स्वरसन्धिः भवति । (स्वरः + स्वरः)
२. व्यञ्जनसन्धिः – व्यञ्जनात् स्वरे व्यञ्जने वा परे व्यञ्जनसन्धिः भवति । (व्यञ्जनम् + वर्णः)
३. विसर्गसन्धिः – विसर्गात् स्वरे व्यञ्जने वा परे विसर्गसन्धिः भवति । (विसर्गः + वर्णः)

१. १०. अधोनिर्दिष्टेषु स्वरसन्धिः, व्यञ्जनसन्धिः उत विसर्गसन्धिः इति यथोदाहरणं रिक्ते स्थाने लिखत –

उदा – यद्यपि + एते = यद्यप्येते (१.३८) **स्वरसन्धिः (इ + ए)**

१. तु + इदम् = त्विदम् (१.१०) ______
२. आत्मनि + एव = आत्मन्येव (२.५५) ______
३. यावत् + एतान् = यावदेतान् (१.२२) ______
४. क्रोधात् + भवति = क्रोधाद्भवति (२.६३) ______
५. यत् + मनः = यन्मनः (२.६७) ______
६. तान् + तितिक्षस्व = तांस्तितिक्षस्व (२.१४) ______
७. शूराः + मदर्थे = शूरा मदर्थे (१.९) ______
८. श्वेतैः + हयैः = श्वेतैर्हयैः (१.१४) ______
९. धीरः + तत्र = धीरस्तत्र (२.१३) ______
१०. मे + अच्युत = मेऽच्युत (१.२१) ______

---

१. संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥

## ज्ञानवर्धनी

एतानि वाक्यानि सावधानं पठत –

विजया गीतां पठति ।
गोविन्दः प्रतिदिनं कार्यालयं गच्छति ।
सर्वे स्वीयानि कार्याणि अकुर्वन् ।
भवन्तः विलम्बं मा कुर्वन्तु ।

एतेषु वाक्येषु सर्वेऽपि शब्दाः **पदानि** इति उच्यन्ते । तानि गणद्वये विभक्तुं शक्यानि –

यथा – १. विजया, गीता, गोविन्दः, प्रतिदिनम्, कार्यालयम्, सर्वे, स्वीयानि, कार्याणि, भवन्तः, विलम्बः, मा

२. पठति, गच्छति, अकुर्वन्, कुर्वन्तु

**एते सुबन्ताः**

सुप् अन्ते यस्य सः सुबन्तः ।

| | | |
|---|---|---|
| सु | औ | जस् |
| अम् | औट् | शस् |
| टा | भ्याम् | भिस् |
| ङे | भ्याम् | भ्यस् |
| ङसि | भ्याम् | भ्यस् |
| ङस् | ओस् | आम् |
| ङि | ओस् | सुप् |

एते २१ **सुप्प्रत्ययाः** ।

प्रातिपदिकात् परे एते प्रत्ययाः भवन्ति । तदा रामः रामौ रामाः इत्यादीनि २१ रूपाणि सिध्यन्ति ।

यथा –

राम + सु = रामः
राम + औ = रामौ
राम + जस् = रामाः

**एते तिङन्ताः**

तिङ् अन्ते यस्य सः तिङन्तः ।

| | | | |
|---|---|---|---|
| तिप् | तस् | झि | परस्मैपदम् |
| सिप् | थस् | थ | |
| मिप् | वस् | मस् | |
| त | आताम् | झ | आत्मनेपदम् |
| थास् | आथाम् | ध्वम् | |
| इड् | वहि | महिङ् | |

एते १८ **तिङ्प्रत्ययाः** ।

धातोः परे एते प्रत्ययाः भवन्ति । तदा भवति भवतः भवन्ति – इत्यादीनि रूपाणि सिध्यन्ति ।

यथा –

भू + तिप् = भवति
भू + तस् = भवतः
भू + झि = भवन्ति

धातुः आत्मनेपदी चेत् तङ्प्रत्ययाः (अन्तिमाः ९) भवन्ति ।

यथा – वन्द + त = वन्दते
वन्द + आताम् = वन्देते
वन्द + झ = वन्दन्ते

सुबन्तानां तिङन्तानां च पदम् इति संज्ञा । तिङन्तानां सुबन्तानां च समूहः वाक्यम् । तदुक्तम् अमरकोषे – तिङ्सुबन्तचयो वाक्यम् ।

# २. सञ्जय उवाच

एतं पाठं सावधानम् उच्चैः पठत –

स्वरसन्धिः

धृतराष्ट्रः – सञ्जय ! कुरुक्षेत्रे समवेताः मामकाः पाण्डवाः च किम् अकुर्वत ?

सञ्जयः – पाण्डवानीकं दृष्ट्वा राजा दुर्योधनः आचार्यम् उपसङ्गम्य इदं वचनम् अब्रवीत् ।

दुर्योधनः – आचार्य ! **पश्यैतां** (पश्य एतां) पाण्डुपुत्राणां चमूम् । एषा महती चमूः । भीष्माभिरक्षितम् अस्माकं बलम् अपर्याप्तम् अस्ति । भीमाभिरक्षितं **त्वेतेषां** (तु एतेषां) बलं पर्याप्तम् । यथाभागम् अवस्थिताः भवन्तः भीष्मम् **एवाभिरक्षन्तु** (एव अभिरक्षन्तु) ।

सञ्जयः – भीष्मः दुर्योधनस्य हर्षं सञ्जनयन् सिंहनादं **विनद्योच्चैः** (विनद्य उच्चैः) शङ्खम् अधमत् । ततः शङ्खाः भेर्यः पणवानकगोमुखाः च **सहसैवाभ्यहन्यन्त** (सहसा एव अभ्यहन्यन्त) । सः शब्दः तुमुलः अभवत् । ततः कृष्णः अर्जुनः अन्ये पाण्डवाः सैनिकाः च पृथक् पृथक् स्वस्य शङ्खान् अधमन् । तदा अर्जुनः हृषीकेशम् इदं वाक्यम् अब्रवीत् ।

अर्जुनः – उभयोः सेनयोः मध्ये रथं स्थापय **मेऽच्युत** ।(मे अच्युत)

सञ्जयः – हृषीकेशः सेनयोः उभयोः मध्ये रथोत्तमं स्थापयित्वा उवाच – 'पार्थ ! **पश्यैतान्** (पश्य एतान्) समवेतान् कुरून्' इति । पार्थः स्वबान्धवान् स्थितान् **तत्रापश्यत्** (तत्र अपश्यत्) । कृपया **परयाविष्टः** (परया आविष्टः) सः विषीदन् इदम् अब्रवीत् ।

अर्जुनः – हे कृष्ण ! अहं **दृष्ट्वेमं** (दृष्ट्वा इमं) स्वजनं न **शक्नोम्यवस्थातुम्** (शक्नोमि अवस्थातुम्) । एते सर्वे मम गुरवः बान्धवाश्च सन्ति । एतैः सह युद्धं न कर्तव्यम् । **यद्यप्येते** (यद्यपि एते) कुलक्षयकृतं दोषं न पश्यन्ति तथापि अस्माभिः **त्वयं** (तु अयं) दोषः न करणीयः । कुलक्षये सति सनातनाः कुलधर्माः प्रणश्यन्ति । धर्मे नष्टे सति कृत्स्नं कुलम् अधर्मः **अभिभवत्युत** । (अभिभवति उत)

सञ्जयः – एवम् **उक्त्वार्जुनः** (उक्त्वा अर्जुनः) रथोपस्थ उपाविशत्। तदा **कृपयाविष्टम्** (कृपया आविष्टम्) अर्जुनं मधुसूदनः इदं वाक्यम् उवाच।

कृष्णः – अर्जुन! कुतः त्वाम् इदं कश्मलं समुपस्थितम्? पार्थ! क्लैब्यं मा प्राप्नुहि। **नैतत्** (न एतत्) **त्वय्युपपद्यते** (त्वयि उपपद्यते)। परन्तप! क्षुद्रं हृदयदौर्बल्यं **त्यक्त्वोत्तिष्ठ** (त्यक्त्वा उत्तिष्ठ)।

अर्जुनः – मधुसूदन! अहं भीष्मं द्रोणं च कथम् इषुभिः प्रतियोत्स्यामि। **द्वाविमौ** (द्वौ इमौ) **पूजार्हावरिसूदन**! (पूजार्हौ अरिसूदन)। गुरून् अहत्वा भैक्ष्यं भोक्तुं यत् इष्यते तद् **अपीह** (अपि इह) लोके श्रेयः।

कृष्णः – भो अर्जुन! त्वम् अशोच्यान् **अन्वशोचः** (अनु अशोचः)। वस्तुतः एनम् आत्मानं शस्त्राणि न छिन्दन्ति, पावकः न दहति, न **क्लेदयन्त्यापः** (क्लेदयन्ति आपः) मारुतः च न शोषयति। यः मानवः आत्मतृप्तः **त्वात्मरतिः** (तु आत्मरतिः) आत्मनि एव सन्तुष्टः भवति सः एतत् जानाति। अतः एव पण्डिताः नानुशोचन्ति। तस्मात् त्वं धीरो भव। युद्धं च कुरु।

*एतस्मिन् पाठे स्थूलाक्षरैः मुद्रितानि स्वरसन्धियुक्तानि पदानि सन्ति। आवरणे सन्धिविभागः अपि दर्शितः अस्ति।*

## अभ्यासः

२. १. पाठे स्थूलाक्षरैः मुद्रितानि पदानि अधः रिक्तस्थानेषु लिखत –

| ________ | ________ | ________ |
|---|---|---|
| ________ | ________ | ________ |
| ________ | ________ | ________ |
| ________ | ________ | ________ |
| ________ | ________ | ________ |
| ________ | ________ | ________ |
| ________ | ________ | ________ |
| ________ | ________ | ________ |

२. २. एतानि पदानि स्वरसन्धियुक्तानि सन्ति।

यथा – पश्यैताम् = पश्य + एताम् ( पश्य् + अ + एताम्)
त्वेतेषाम् = तु + एतेषाम् (त् उ + एतेषाम्)
मेऽच्युत = मे + अच्युत (म् ए + अच्युत)

एवमेव अधःस्थितेषु रिक्तस्थानानि पूरयत –

तत्रापश्यत् = तत्र् अ + ____ पश्यत्
परयाविष्टः = परय् ____ + आविष्टः
पश्यैतान् = पश्य् ____ + ____ तान्
सहसैवाभ्यहन्यन्त = सहस् ____ + ____ वाभ्यहन्यन्त

## स्वरसन्धिः

स्वरसन्धिः (स्वरः + स्वरः)

स्वरात् स्वरे परे स्वरसन्धिः भवति। एषः अष्टविधः।

१. सवर्णदीर्घसन्धिः २. गुणसन्धिः ३. वृद्धिसन्धिः ४. यण्सन्धिः ५. यान्तवान्तादेशसन्धिः

६. पूर्वरूपसन्धिः ७. पररूपसन्धिः ८. प्रकृतिभावसन्धिः

सः सर्वोऽपि अत्र सोदाहरणं क्रमशः निरूपितः अस्ति। तत् सावधानं पठत –

### १. सवर्णदीर्घसन्धिः –

**अ)** एतानि उदाहरणानि परिशीलयत –

१. अव्ययस्य + अस्य = अव्ययस्य् + (अ + अ) + स्य
= अव्ययस्य् + आ + स्य = अव्ययस्यास्य (२.१७)

२. आधाय + आत्मनः = आधाय् + (अ + आ) + त्मनः
= आधाय् + आ + त्मनः = आधायात्मनः (८.१२)

३. उपद्रष्टा + अनुमन्ता = उपद्रष्ट् + (आ + अ) + नुमन्ता
= उपद्रष्ट् + आ + नुमन्ता = उपद्रष्टानुमन्ता (१३.२२)

४. यथा + आकाशस्थितः = यथ् + (आ + आ) + काशस्थितः
= यथ् + आ + काशस्थितः = यथाकाशस्थितः (९.६)

एतेषु उदाहरणेषु 'अ/आ' इति वर्णाभ्यां परतः 'अ/आ' वर्णौ स्तः। तत्र 'अ/आ +अ/आ' वर्णयोः स्थाने 'आ' इत्यादेशः सम्पन्नः अस्ति।

**आ)** एतानि उदाहरणानि परिशीलयत –

१. श्रोत्रादीनि + इन्द्रियाणि = श्रोत्रादीन् + (इ + इ) + न्द्रियाणि
= श्रोत्रादीन् + ई + न्द्रियाणि = श्रोत्रादीनीन्द्रियाणि (४.२६)

२. उत्क्रामति + ईश्वरः = उत्क्रामत् + (इ + ई) + श्वरः
= उत्क्रामत् + ई + श्वरः = उत्क्रामतीश्वरः (१५.८)

३. त्यागी + इति = त्याग् + (ई + इ) + ति
= त्याग् + ई + ति = त्यागीति (१८.११)

४. गौरी + ईक्षते = गौर् + (ई + ई) + क्षते
= गौर् + ई + क्षते = गौरीक्षते

एतेषु उदाहरणेषु 'इ/ई' इति वर्णाभ्यां परतः 'इ/ई' वर्णौ स्तः। तत्र 'इ/ई + इ/ई' वर्णयोः स्थाने 'ई' इत्यादेशः सम्पन्नः अस्ति।

**इ)** एतद् उदाहरणं परिशीलयत –

१. तेषु + उपजायते = तेष् + (उ + उ) + पजायते
= तेष् + ऊ + पजायते = तेषूपजायते (२.६२)

एतस्मिन् उदाहरणे 'उ' इति वर्णात् परतः 'उ' वर्णः अस्ति । तत्र 'उ + उ' वर्णयोः स्थाने 'ऊ' इत्यादेशः सम्पन्नः अस्ति ।

'अ आ' इत्येताभ्याम् 'अ आ' इत्येतयोः वर्णयोः परयोः आकारः, 'इ ई' इत्येताभ्याम् 'इ ई' इत्येतयोः परयोः ईकारः, 'उ ऊ' इत्येताभ्याम् 'उ ऊ' इत्येतयोः परयोः ऊकारः, 'ऋ' इत्यस्मात् 'ऋ ऌ' इत्येतयोः परयोः ॠ कारः, पूर्वपरयोः स्थाने एकः आदेशो भवति ।

| | |
|---|---|
| अ / आ + अ / आ = आ | इ / ई + इ / ई = ई |
| उ / ऊ + उ / ऊ = ऊ | ऋ + ऋ / ऌ = ॠ |

'अ आ आ३' इत्येते सवर्णाः । 'इ ई ई३' इत्यादयः अपि सवर्णाः । अस्मिन् सन्धौ सवर्णयोः स्वरयोः स्थाने तत्तद्वर्णस्य दीर्घस्वरः आदेशः भवति । अतः 'सवर्णदीर्घसन्धिः' इति अस्य नाम ।

## अभ्यासः

२. ३. सन्धिं कुरुत –

१. विद्यार्थी + इव = ____________

२. तासु + उत्तमा = ____________

३. ब्रह्म + अक्षरसमुद्भवम् (३.१५) = ____________

४. प्रतिष्ठा + अहम् (१४.२७) = ____________

५. पश्यति + ईश्वरः = ____________

६. मूढग्राहेण + आत्मनः (१७.१९) = ____________

७. सुष्ठु + ऊचुः = ____________

८. मनःषष्ठानि + इन्द्रियाणि (१५.७) = ____________

२. ४. स्थूलाक्षरस्य पदस्य विच्छेदं कुरुत –

१. **अचिरेणाधिगच्छति** (४.३९) = ____________ + ____________

२. कूर्मः **अङ्गानीव** सर्वशः (२.५८) = ____________ + ____________

३. **मयाध्यक्षेण** प्रकृतिः (९.१०) = ____________ + ____________

४. **तस्याराधनम्** ईहते (७.२२) = ____________ + ____________

५. **वहतीशः** = ____________ + ____________

६. **कुर्वतीति** = ____________ + ____________

### ३. गुणसन्धिः –

अ) एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. न + इङ्गते | = न् + (अ + इ) + ङ्गते | |
| | = न् + ए + ङ्गते | = नङ्गते (६.१९) |
| २. च + ईर्ष्या | = च् + (अ + ई) + र्ष्या | |
| | = च् + ए + र्ष्या | = चेर्ष्या |
| ३. दृष्ट्वा + इमम् | = दृष्ट्व् + (आ + इ) + मम् | |
| | = दृष्ट्व् + ए + मम् | = दृष्ट्वेमम् (१.२८) |
| ४. बालिका + ईक्षते | = बालिक् + (आ + ई) + क्षते | |
| | = बालिक् + ए + क्षते = बालिकेक्षते | |

एतेषु उदाहरणेषु 'अ+इ, अ+ई, आ+इ, आ+ई ' इति द्वौ द्वौ वर्णौ स्तः । तत्र द्वयोः द्वयोः वर्णयोः स्थाने 'ए' इत्यादेशः सम्पन्नः अस्ति ।

आ) एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. विनद्य + उच्चैः | = विनद्य् + (अ + उ) + च्चैः | |
| | = विनद्य् + ओ + च्चैः = विनद्योच्चैः (१.१२) | |
| २. त्यक्त्वा + उत्तिष्ठ | = त्यक्तव् + (आ + उ) + त्तिष्ठ | |
| | = त्यक्तव् + ओ + त्तिष्ठ = त्यक्त्वोत्तिष्ठ (२.३) | |
| ३. च + ऊर्ध्वम् | = च् + (अ + ऊ) + र्ध्वम् | |
| | = च् + ओ + र्ध्वम् = चोर्ध्वम् (१५.२) | |

एतेषु उदाहरणेषु 'अ+उ, आ+उ, अ+ऊ' इति द्वौ द्वौ वर्णौ स्तः । तत्र द्वयोः द्वयोः वर्णयोः स्थाने 'ओ' इत्यादेशः सम्पन्नः अस्ति ।

इ) एते उदाहरणे परिशीलयत –

| | | |
|---|---|---|
| १. मम + ऋणम् | = मम् + (अ + ऋ) + णम् | |
| | = मम् + अर् + णम् | = ममर्णम् |
| २. महा + ऋषयः | = मह् + (आ + ऋ) + षयः | |
| | = मह् + अर् + षयः | = महर्षयः (१०.६) |

एतयोः उदाहरणयोः 'अ+ऋ, आ+ऋ' इति द्वौ द्वौ वर्णौ स्तः । तत्र द्वयोः द्वयोः वर्णयोः स्थाने 'अर्' इत्यादेशः सम्पन्नः अस्ति ।

| | |
|---|---|
| अ / आ + इ / ई = ए | अ / आ + उ / ऊ = ओ |
| अ / आ + ऋ / ॠ = अर् | अ / आ + ऌ = अल् |

'गुणः' इति काचित् संज्ञा । 'ए ओ अर् अल्' इत्येते गुणसंज्ञां प्राप्नुवन्ति । अस्मिन् सन्धौ एते वर्णाः आदेशाः भवन्ति । अतः 'गुणसन्धिः' इति अस्य नाम ।

२. ५. पदच्छेदं कुरुत –

१. देवर्षिः = ________ + ________
२. परयोपेताः (१२.२) = ________ + ________
३. मद्भावायोपपद्यते (१३.१८) = ________ + ________
४. सन्नियम्येन्द्रियग्रामम् (१२.४) = ________ + ________
५. परमात्मेति (१३.२२) = ________ + ________
६. इन्द्रियस्येन्द्रियस्यार्थे (३.३४) = ________ + ________
७. तथोपलभ्यते (१५.३) = ________ + ________

२. ६. सन्धिं कुरुत –

१. त्वया + उक्तम् (११.१) = ________
२. काक + उलूकौ = ________
३. एव + उपजुह्वति (४.२५) = ________
४. परमात्मा + इव = ________
५. ज्ञात्वा + उपास्य = ________
६. नरकस्य + इदम् (१६.२१) = ________
७. सप्त + ऋषयः = ________

## ४. वृद्धिसन्धिः –

अ) एतानि उदाहरणानि परिशीलयत –

१. नियम्य + एतत् = नियम्य् + (अ + ए) + तत्
= नियम्य् + ऐ + तत् = नियम्यैतत् (६.२६)

२. तथा + एव = तथ् + (आ + ए) + व
= तथ् + ऐ + व = तथैव (१.८)

३. इन्द्र + ऐरावतौ = इन्द्र् + (अ + ऐ) + रावतौ
= इन्द्र् + ऐ + रावतौ = इन्द्रैरावतौ

४. रमा + ऐश्वर्यम् = रम् + (आ + ऐ) + श्वर्यम्
= रम् + ऐ + श्वर्यम् = रमैश्वर्यम्

एतेषु उदाहरणेषु 'अ/आ' इति वर्णाभ्यां परतः 'ए/ऐ' वर्णौ स्तः । तत्र 'अ+ए , अ+ऐ ,आ+ए ,आ+ऐ' इति द्वयोः द्वयोः वर्णयोः स्थाने 'ऐ' इत्यादेशः सम्पन्नः अस्ति ।

आ) एतानि उदाहरणानि परिशीलयत -

| | | |
|---|---|---|
| १. च + ओषधीः | = च् + (अ + ओ) + षधीः | |
| | = च् + औ + षधीः | = चौषधीः (१५.१३) |
| २. जिह्वा + ओष्ठम् | = जिह्व् + (आ + ओ) + ष्ठम् | |
| | = जिह्व् + औ + ष्ठम् | = जिह्वौष्ठम् |
| ३. बाल + औत्सुक्यम् | = बाल् + (अ + औ) + त्सुक्यम् | |
| | = बाल् + औ + त्सुक्यम् | = बालौत्सुक्यम् |
| ४. लता + औषधम् | = लत् + (आ + औ) + षधम् | |
| | = लत् + औ + षधम् | = लतौषधम् |

एतेषु उदाहरणेषु 'अ/आ' इति वर्णाभ्यां परतः 'ओ/औ' वर्णौ स्तः। तत्र 'अ+ओ, अ+औ, आ+ओ, आ+औ' इति द्वयोः द्वयोः वर्णयोः स्थाने 'औ' इत्यादेशः सम्पन्नः अस्ति।

इ) एते उदाहरणे परिशीलयत -

| | | |
|---|---|---|
| १. उप + ऋच्छति | = उप् + (अ + ऋ) + च्छति | |
| | = उप् + आर् + च्छति | = उपार्च्छति |
| २. प्र + ऋषभीयति | = प्र् + (अ + ऋ) + षभीयति | |
| | = प्र् + आर् + षभीयति | = प्रार्षभीयति |

एतयोः उदाहरणयोः अकारान्तोपसर्गस्य परतः ऋकारादिः धातुः अस्ति । तत्र 'अ + ऋ' इति वर्णयोः स्थाने 'आर्' इत्यादेशः सम्पन्नः अस्ति।

'अ आ' इत्येताभ्याम् 'ए ऐ' इत्येतयोः वर्णयोः परयोः 'ऐ'कारः, 'ओ औ' इत्येतयोः परयोः 'औ'कारः पूर्वपरयोः स्थाने एकः आदेशः भवति। अकारान्ताद् आकारान्ताद्वा उपसर्गाद् ऋकारादौ धातौ परे पूर्वपरयोः स्थाने आर् इत्यादेशो भवति। ऋकारादौ लृकारादौ वा सुब्धातौ परे तु विकल्पेन।

**अ / आ + ए / ऐ = ऐ**
**अ / आ + ओ / औ = औ**
**(उपसर्ग) अ / आ + ऋ (ऋकारादिः धातुः) = आर्**
**(उपसर्ग) अ / आ + लृ (लृकारादिः धातुः) = आल्**

'वृद्धिः' इति काचित् संज्ञा। 'ऐ औ आर् आल्' इत्येते वृद्धिसंज्ञां प्राप्नुवन्ति। अस्मिन् सन्धौ पूर्वपरयोः वर्णयोः स्थाने एते आदेशाः भवन्ति। अतः 'वृद्धिसन्धिः' इति नाम।

२. ७. सन्धिं कुरुत –

१. नरकाय + एव (१.४२) = ____________

२. इह + एकस्थम् (११.७) = ____________

३. सुखस्य + एकान्तिकस्य (१४.२७) = ____________

४. मया + एव + एते (११.३३) = ____________

५. गृहीत्वा + एतानि (१५.८) = ____________

१. यण्सन्धिः –

इ / ई + असमानस्वरः = य्
उ / ऊ + असमानस्वरः = व्
ऋ / ॠ + असमानस्वरः = र्

इ / ई → य् + स्वरः    उ / ऊ → व् + स्वरः    ऋ / ॠ → र् + स्वरः

अ) एतानि उदाहरणानि परिशीलयत –

१. शक्नोमि + अवस्थातुम् = शक्नोम् + इ + अ + वस्थातुम्
= शक्नोम् + य् + अ + वस्थातुम् = शक्नोम्यवस्थातुम् (१.३०)

२. क्लेदयन्ति + आपः = क्लेदयन्त् + इ + आ + पः
= क्लेदयन्त् + य् + आ + पः = क्लेदयन्त्यापः (२.२३)

३. अभिभवति + उत = अभिभवत् + इ + उ + त
= अभिभवत् + य् + उ + त = अभिभवत्युत (१.४०)

४. वि + ऊढा = व् + इ + ऊ + ढा
= व् + य् + ऊ + ढा = व्यूढा (१.३)

५. यद्यपि + एते = यद्यप् + इ + ए + ते
= यद्यप् + य् + ए + ते = यद्यप्येते (१.३८)

६. पार्वती + ऐश्वर्यम् = पार्वत् + ई + ऐ + श्वर्यम्
= पार्वत् + य् + ऐ + श्वर्यम् = पार्वत्यैश्वर्यम्

७. नदी + ओघः = नद् + ई + ओ + घः
= नद् + य् + ओ + घः = नद्योघः

८. भवानी + औज्ज्वल्यम् = भवान् + ई + औ + ज्ज्वल्यम्
= भवान् + य् + औ + ज्ज्वल्यम् = भवान्यौज्ज्वल्यम्

एतेषु उदाहरणेषु 'इ/ई' इति वर्णाभ्यां परतः 'इ/ई' वर्णौ विना अन्ये स्वराः सन्ति । तत्र 'इ/ई' वर्णयोः स्थाने यकारादेशः सम्पन्नः अस्ति ।

आ) एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. तेषु + अवस्थितः | = तेष् + उ + अ + वस्थितः | |
| | = तेष् + व् + अ + वस्थितः | = तेष्ववस्थितः (९.४) |
| २. तु + आत्मरतिः | = त् + उ + आ + त्मरतिः | |
| | = त् + व् + आ + त्मरतिः | = त्वात्मरतिः (३.१७) |
| ३. तु + इदम् | = त् + उ + इ + दम् | |
| | = त् + व् + इ + दम् | = त्विदम् (१.१०) |
| ४. तेषु + ईप्सितः | = तेष् + उ + ई + प्सितः | |
| | = तेष् + व् + ई + प्सितः | = तेष्वीप्सितः |
| ५. तु + एव | = त् + उ + ए + व | |
| | = त् + व् + ए + व | = त्वेव (२.१२) |
| ६. तासु + ऐक्यम् | = तास् + उ + ऐ + क्यम् | |
| | = तास् + व् + ऐ + क्यम् | = तास्वैक्यम् |
| ७. कटु + औषधम् | = कट् + उ + औ + षधम् | |
| | = कट् + व् + औ + षधम् | = कट्वौषधम् |
| ८. वधू + ऐश्वर्यम् | = वध् + ऊ + ऐ + श्वर्यम् | |
| | = वध् + व् + ऐ + श्वर्यम् | = वध्वैश्वर्यम् |
| ९. सरयू + ओघः | = सरय् + ऊ + ओ + घः | |
| | = सरय् + व् + ओ + घः | = सरय्वोघः |

एतेषु उदाहरणेषु 'उ/ऊ' इति वर्णाभ्यां परतः 'उ/ऊ' वर्णौ विना अन्ये स्वराः सन्ति। तत्र 'उ/ऊ' वर्णयोः स्थाने वकारादेशः सम्पन्नः अस्ति।

इ) एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. मातृ + ऐश्वर्यम् | = मात् + ऋ + ऐ + श्वर्यम् | |
| | = मात् + र् + ऐ + श्वर्यम् | = मात्रैश्वर्यम् |
| २. पितृ + ओजः | = पित् + ऋ + ओ + जः | |
| | = पित् + र् + ओ + जः | = पित्रोजः |
| ३. दातृ + औदार्यम् | = दात् + ऋ + औ + दार्यम् | |
| | = दात् + र् + औ + दार्यम् | = दात्रौदार्यम् |

एतेषु उदाहरणेषु 'ऋ/ॠ' इति वर्णाभ्यां परतः 'ऋ/ॠ' वर्णौ विना अन्ये स्वराः सन्ति। तत्र 'ऋ/ॠ' वर्णयोः स्थाने 'र्' इत्यादेशः सम्पन्नः अस्ति।

पूर्वोक्तानि सर्वाणि अपि यणसन्धेः उदाहरणानि।

इ ई उ ऊ ऋ ॠ ऌ इत्येतेभ्यः वर्णेभ्यः असवर्णे स्वरे परे 'इ ई' इत्यनयोः स्थाने यकारः, 'उ ऊ' इत्यनयोः स्थाने वकारः, 'ऋ ॠ' इत्यनयोः स्थाने रेफः, ऌकारस्य स्थाने लकारश्च आदेशो भवति।

**इ/ई, उ/ऊ, ऋ/ॠ , ऌ + असवर्णस्वरः = य्, व्, र्, ल् + असवर्णस्वरः**

यण् इति प्रत्याहारः। तेन य् व् र् ल् – इत्येतेषां व्यञ्जनानां ग्रहणं भवति। यणः आदेशाः भवन्ति इत्यतः अयं सन्धिः 'यण्सन्धिः' इत्युच्यते।

**अभ्यासः**

२. ८. स्थूलाक्षरेषु पदेषु सन्धिच्छेदं कुरुत –

१. परामत्मा **इत्युदाहृतः** (१५.१७) = ________ + ________

२. **सम्भवाम्यात्ममायया** (४.६) = ________ + ________

३. **यजन्त्यविधिपूर्वकम्** (९.२३) = ________ + ________

४. **दुःखेष्वनुद्विग्नमनाः** (२.५६) = ________ + ________

५. **अस्त्विष्टकामधुक्** (३.१०) = ________ + ________

२. ९. सन्धिं कुरुत –

१. भवति + अल्पमेधसाम् (७.२३) = ________

२. इन्द्रियाणि + आदौ (३.४१) = ________

३. इति + उपधारय (९.६) = ________

४. मोहयति + एषः (३.४०) = ________

५. कर्मसु + अनुषज्जते (६.४) = ________

६. धातृ + ओजः = ________

७. क्षिपामि + अजस्रम् (१६.१९) = ________

८. सरस्वती + ऐश्वर्यम् = ________

९. वक्तृ + औदासीन्यम् = ________

## २. यान्तवान्तादेशसन्धिः (अयादिसन्धिः)

अ) एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. हरे + ए | = हर् + ए + ए | |
| | = हर् + अय् + ए | = हरये |
| २. विष्णो + ए | = विष्ण् + ओ + ए | |
| | = विष्ण् + अव् + ए | = विष्णवे |

| | | |
|---|---|---|
| ३. नै + अकः | = न् + ऐ + अकः | |
| | = न् + आय् + अकः | = नायकः |
| ४. पूजार्हौ + अरिसूदन | = पूजार्ह् + औ + अ + रिसूदन | |
| | = पूजार्ह् + आव् + अ + रिसूदन | = पूजार्हावरिसूदन (२.४) |
| ५. द्वौ + इमौ | = द्व् + औ + इ + मौ | |
| | = द्व् + आव् + इ + मौ | = द्वाविमौ (१५.१६) |

एतेषु उदाहरणेषु 'ए ओ ऐ औ' वर्णेभ्यः परतः स्वराः सन्ति। तत्र 'ए'वर्णस्य स्थाने 'अय्' आदेशः, 'ओ'वर्णस्य स्थाने 'अव्' आदेशः, 'ऐ'वर्णस्य स्थाने 'आय्' आदेशः, 'औ'वर्णस्य स्थाने 'आव्' आदेशः च सम्पन्नः अस्ति।

'ए ऐ ओ औ' इत्येतेभ्यो वर्णेभ्यः स्वरे परे एकारस्य स्थाने अय्, ऐकारस्य स्थाने आय्, ओकारस्य स्थाने अव्, औकारस्य स्थाने आव् इति आदेशाः भवन्ति।

**ए , ऐ , ओ , औ + स्वरः = अय् , आय् , अव् , आव् + स्वरः**

'अय् आय्' इत्येतौ यान्तौ। अन्ते य् अस्ति इत्यर्थः। 'अव् आव्' इत्येतौ वान्तौ। अस्मिन् सन्धौ यान्तवान्ताः पूर्ववर्णस्य स्थाने आदेशाः भवन्ति। अतः 'यान्तवान्तादेशसन्धिः' इति एतस्य नाम।

२. १०. रिक्तस्थानानि पूरयत –

१. ______ + ______ = भूमावसपत्नम् (२.८)
२. नै + अकः = ______ (१.७)
३. पौ + अकः = ______ (२.२३)

## ६. पूर्वरूपसन्धिः –

एते उदाहरणे परिशीलयत –

| | | |
|---|---|---|
| १) मे + अच्युत | = म् + (ए + अ) + च्युत | |
| | = म् + एऽ + च्युत | = मेऽच्युत (१.२१) |
| २) तुमुलो + अभवत् | = तुमुल् + (ओ + अ) + भवत् | |
| | = तुमुल् + ओऽ + भवत् | = तुमुलोऽभवत् (१.१३) |

एतयोः उदाहरणयोः 'ए / ओ' इति वर्णाभ्यां परतः अकारः अस्ति। तत्र 'ए / ओ + अ' इति वर्णयोः स्थाने 'ए / ओ' इत्यादेशः सम्पन्नः अस्ति।

'ऽ' इदं चिह्नं स्पष्टप्रतिपत्तये लिख्यते। पाणिनिना तु न विहितम्।

पदान्ताद् एकाराद् अकारे परे एकारः, पदान्ताद् ओकाराद् अकारे परे ओकारः इति पूर्वपरयोः स्थाने एकादेशो भवति। पूर्ववर्णः (ए / ओ) आदेशः भवति, अतः 'पूर्वरूपसन्धिः' इति अस्य नाम।

| ए + अ = एऽ | ओ + अ = ओऽ |
|---|---|

## ७. पररूपसन्धिः –

एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. प्र + एजते | = प्र् + (अ + ए) + जते | |
| | = प्र् + ए + जते | = प्रेजते |
| २. उप + ओषति | = उप् + (अ + ओ) + षति | |
| | = उप् + ओ + षति | = उपोषति |
| ३. शिवाय + ओं नमः | = शिवाय् + (अ + ओं) + नमः | |
| | = शिवाय् + ओं + नमः | = शिवायों नमः |

एतेषु उदाहरणेषु अकारात् परतः 'ए / ओ' वर्णौ स्तः । तत्र 'अ + ए / ओ' वर्णयोः स्थाने 'ए / ओ' इत्यादेशः सम्पन्नः अस्ति ।

अवर्णान्ताद् उपसर्गाद् एकारादौ धातौ परे 'एकारः', ओकारदौ धातौ ओम्शब्दे च परे 'ओकारः' पूर्वपरयोः स्थाने एकः आदेशो भवति । वृद्धेः अयम् अपवादः ।

| अ + ए = ए | अ + ओ = ओ | अ / आ + ओम् = ओ (म्) |
|---|---|---|

अस्मिन् सन्धौ पूर्वपरयोः स्वरयोः स्थाने परस्वरः आदेशः भवति । अतः 'पररूपसन्धिः' इति नाम ।

**अस्यापवादः –**

एकारादौ इण्धातौ एध्धातौ च परे पररूपं न, किन्तु वृद्धिरेव । यथा –

| | | |
|---|---|---|
| उप + एति | = उप् + (अ + ए) + ति | |
| | = उप् + ऐ + ति (वृद्धिसन्धिः) | = उपैति (६.२७) |
| प्र + एधते | = प्र् + (अ + ए) + धते | |
| | = प्र् + ऐ + धते (वृद्धिसन्धिः) | = प्रैधते |

## ८. प्रकृतिभावः –

### ८.१. ऋति प्रकृतिभावः –

एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. राजा + ऋषिः | = राज ऋषिः | (इमे भिन्ने पदे) |
| | = राजर्षिः | (अत्र विकल्पेन गुणसन्धिः) |
| राज + ऋषिः | = राजऋषिः | (इदं समस्तं पदम्) |
| | = राजर्षिः | (अत्र विकल्पेन गुणसन्धिः) |
| २. वर्षा + ऋतुः | = वर्ष ऋतुः | (इमे भिन्ने पदे) |
| | = वर्षर्तुः | (अत्र विकल्पेन गुणसन्धिः) |

| | | |
|---|---|---|
| वर्ष + ऋतुः | = वर्षऋतुः | (इदं समस्तं पदम्) |
| | = वर्षर्तुः | (अत्र विकल्पेन गुणसन्धिः) |
| ३. गुरु + ऋणम् | = गुरुऋणम् | (इदं समस्तं पदम्) |
| | = गुर्वृणम् | (अत्र विकल्पेन यण्सन्धिः) |
| ४. वधू + ऋणम् | = वधुऋणम् | (इदं समस्तं पदम्) |
| | = वध्वृणम् | (इमे भिन्ने पदे) |
| ५. पितृ + ऋणम् | = पितृऋणम् | (इदं समस्तं पदम्) |
| | = पितृणम् | (अत्र विकल्पेन सवर्णदीर्घसन्धिः) |

एतेषु उदाहरणेषु 'अ आ इ ई उ ऊ ऋ' इत्येते स्वराः सन्ति, तेभ्यः परतः ऋकारः अस्ति। सन्धेः निमित्तम् अस्ति, तथापि सन्धिकार्यं न सम्पन्नम्। निमित्ते सत्यपि सन्धिकार्याभावः प्रकृतिभावः।

### २. प्लुतप्रकृतिभावः -

एतद् उदाहरणं परिशीलयत -

आगच्छ कृष्ण३ + अत्र गौश्चरति।
सवर्णदीर्घसन्धेः निमित्तम् अस्ति। परन्तु सन्धिः न भवति।
अतः 'आगच्छ कृष्ण३ + अत्र गौश्चरति' इत्येव वाक्यम्। अयं प्लुतप्रकृतिभावः।

### २. प्रगृह्यप्रकृतिभावः -

एतानि उदाहरणानि परिशीलयत -

| | | |
|---|---|---|
| १. अनादी + उभौ | (यण्सन्धेः निमित्तमस्ति) | = अनादी उभौ (१३.१०) |
| २. गुरू + उत्तिष्ठतः | (सवर्णदीर्घसन्धेः निमित्तमस्ति) | = गुरू उत्तिष्ठतः। |
| ३. वने + एते | (यान्तवान्तादेशसन्धेः निमित्तमस्ति) | = वने एते। |

अत्र पूर्वपदम् ईकारान्तम् ऊकारान्तम् एकारान्तं च द्विवचनम् अस्ति। तस्मात् परतः स्वरः अस्ति। अतः स्वरसन्धेः निमित्तम् अस्ति। तथापि सन्धेः अभावः। प्रगृह्यम् इति काचित् संज्ञा -

१. ईकारान्तम् ऊकारान्तम् एकारान्तं च द्विवचनं प्रगृह्यं भवति।

२. अमी इत्यस्य ईकारः प्रगृह्यः भवति।

३. ओकारान्तम् अव्ययम्, आ इत्यव्ययं च (आङ् न ग्राह्यः) प्रगृह्यं भवति।

प्रगृह्यप्रकृतिभावस्य अन्यानि उदाहरणानि -

| | | |
|---|---|---|
| १. अमी + आश्रमाः | (यण्सन्धेः निमित्तम् अस्ति) | = अमी आश्रमाः |
| २. अहो + अत्र | (पूर्वरूपसन्धेः निमित्तम् अस्ति) | = अहो अत्र |
| ३. आ + एवं नु मन्यसे | (वृद्धिसन्धेः निमित्तम् अस्ति) | = आ एवं नु मन्यसे |

## अभ्यासः

२. ११. यथोदाहरणं स्वरसन्धिनाम निर्दिशत –

| सन्धिपदम् | पदच्छेदः | वर्णक्रमः | स्वरसन्धिनाम |
|---|---|---|---|
| उदा. आत्मन्येव(२.५५) | आत्मनि + एव | आत्मन् + इ + ए + व | |
| | | आत्मन् +य् + ए + व | यणसन्धिः |
| १. निःश्रेयसकरावुभौ (५.२) | निःश्रेयसकरौ + उभौ | निःश्रेयसकर् + औ + उ + भौ | |
| | | निःश्रेयसकर् + आव् + उ + भौ | ———— |
| २. कालेनेह (४.२) | कालेन + इह | कालेन् + अ + इ + ह | |
| | | कालेन् + ए + ह | ———— |
| ३. ब्रह्मैव (४.२४) | ब्रह्म + एव | ब्रह्म् + अ + ए + व | |
| | | ब्रह्म् + ऐ + व | ———— |
| ४. इमेऽवस्थिताः (१.३३) | इमे + अवस्थिताः | इम् + ए + अ + वस्थिताः | |
| | | इम् + एऽ + वस्थिताः | ———— |
| ५. पश्यैताम् (१.३) | पश्य + एताम् | पश्य् + अ + ए + ताम् | |
| | | पश्य् + ऐ + ताम् | ———— |
| ६. सर्वाणीन्द्रियकर्माणि(४.२७) | सर्वाणि + इन्द्रियकर्माणि | सर्वाण् + इ + इन्द्रियकर्माणि | |
| | | सर्वाण् + ई + न्द्रियकर्माणि | ———— |
| ७. वेदाविनाशिनम् (२.२१) | वेद + अविनाशिनम् | वेद् + अ + अ + विनाशिनम् | |
| | | वेद् + आ + विनाशिनम् | ———— |
| ८. त्विदम् (१.१०) | तु + इदम् | त् + उ + इ + दम् | |
| | | त् + व् + इ + दम् | ———— |
| ९. कुरुतेऽर्जुन (४.३७) | कुरुते + अर्जुन | कुरुत् + ए + अ + र्जुन | |
| | | कुरुत् + एऽ + र्जुन | ———— |
| १०. भूमावसपत्नम् (२.८) | भूमौ + असपत्नम् | भूम् + औ + अ + सपत्नम् | |
| | | भूम् + आव् + अ + सपत्नम् | ———— |
| ११. आतिष्ठोत्तिष्ठ (४.४२) | आतिष्ठ + उत्तिष्ठ | आतिष्ठ् + अ + उ + त्तिष्ठ | |

| | | | |
|---|---|---|---|
| | | आतिष्ठ् + ओ + त्तिष्ठ | ________ |
| १२. इत्यनुशुश्रुम (१.४४) | इति + अनुशुश्रुम | इत् + इ + अ + नुशुश्रुम | |
| | | इत् + य् + अ + नुशुश्रुम | ________ |

२. १२. यथोदाहरणं सन्धिप्रक्रियां निर्दिशत –

| पदच्छेदः | संयुक्तपदम् | सन्धिप्रक्रिया |
|---|---|---|
| उदा. द्रक्ष्यसि + आत्मनि | द्रक्ष्यस्यात्मनि (४.३५) | इ + आ = य् + आ |
| १. च + अक्रियः | चाक्रियः (६.१) | ________ |
| २. हि + असन्यस्तसङ्कल्पः | ह्यसन्यस्तसङ्कल्पः (६.२) | ________ |
| ३. तस्य + एव | तस्यैव (६.३) | ________ |
| ४. कर्मसु + अनुषज्जते | कर्मस्वनुषज्जते (६.४) | ________ |
| ५. तदा + उच्यते | तदोच्यते (६.४) | ________ |
| ६. आत्मा + आत्मनः | आत्मात्मनः (६.६) | ________ |
| ७. तत्र + एकाग्रम् | तत्रैकाग्रम् (६.१२) | ________ |
| ८. श्रीमद्भगवद्गीतासु + उपनिषत्सु | श्रीमद्भगवद्गीतासूपनिषत्सु | ________ |
| ९. इह + एकस्थम् | इहैकस्थम् (११.७) | ________ |
| १०. ते + अव्ययाम् | तेऽव्ययाम् (२.३४) | ________ |

२. १३. अधोनिर्दिष्टेषु पदेषु सन्धिच्छेदं कुरुत –

१. येनात्मैवात्मना (६.६) ________ + ________ + ________ + ________

२. कुरुतेऽर्जुन (४.३७) ________ + ________

३. अचिरेणाधिगच्छति (४.३९) ________ + ________

४. द्रक्ष्यस्यात्मन्यथो (४.३५) ________ + ________ + ________

५. पश्यन्त्यात्मन्यवस्थितम् (१५.११) ________ + ________ + ________

६. सिद्धावसिद्धौ (४.२२) ________ + ________

७. द्वाविमौ (१५.१६) ________ + ________

८. चौषधीः (१५.१३) ________ + ________

९. परमात्मेत्युदाहृतः (१५.१७) ________ + ________ + ________

१०. यथोल्बेनावृतो (३.३८) ________ + ________ + ________

२. १४. सन्धिं कुरुत -

१. अपरिहार्ये + अर्थे = ____________ (२.२७)
२. आत्मा + एव = ____________ (६.५)
३. उपविश्य + आसने = ____________ (६.१२)
४. ब्रह्म + अर्पणम् = ____________ (४.२४)
५. मनःषष्ठानि + इन्द्रियाणि = ____________ (१५.७)
६. यथा + एधांसि = ____________ (४.३७)
७. प्लवेन + एव = ____________ (४.३६)
८. त्वया + उक्तम् = ____________ (११.१)
९. राजसस्य + इष्टाः = ____________ (१७.९)
१०. उभौ + अपि = ____________ (१३.१९)

२. १५. भगवद्गीतायां प्रायेण प्रतिश्लोकम् अवरतः द्वित्राः सन्धयः वर्तन्ते । केषुचित् ततोऽपि न्यूनाः । द्वितीयेऽध्याये यत्र एकः एव सन्धिः अस्ति, स च यणसन्धिः, तं श्लोकम् अन्विष्यत । सन्धिपदस्य छेदमपि कुरुत[१] -

२. १६. यथोदाहरणं सम्बन्धं यथोचितं कुरुत -

| | |
|---|---|
| १. मय्यर्पितमनोबुद्धिः (८.७) | (क) औ + अ = आव् + अ |
| २. भजत्येकत्वम् (६.३१) | (ख) आ + इ = ए |
| ३. तेष्ववस्थितः (९.४) | (ग) अ + ऐ = ऐ |
| ४. उभावपि (१३.१९) | (घ) इ + अ = य् + अ |
| ५. दृष्ट्वेमम् (१.२८) | (ङ) आ + ए = ऐ |
| ६. मद्भावायोपपद्यते (१३.१८) | (च) आ + आ = आ |
| ७. सुखस्यैकान्तिकस्य (१४.२७) | (छ) आ + अ = आ |
| ८. गृहीत्वैतानि (१५.८) | (ज) इ + ए = य् + ए |
| ९. श्रद्धयान्विताः (९.२३) | (झ) अ + उ = ओ |
| १०. यथाकाशस्थितः (९.६) | (ञ) उ + अ = व् + अ |

(उदाहरणम्: १ → घ)

१. (उत्तरम् - २.२८ अव्यक्तनिधनान्येव = अव्यक्तनिधनानि + एव)

# ३. अपकारिणामपि उपकारः

**व्यञ्जनसन्धिः**

एतानि गीतावाक्यानि सावधानं परिशीलयत –

कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसम्मूढचेताः ।
**यच्छ्रेयः स्यान्निश्चितं** ब्रूहि **तन्मे** शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ (२.७)
**यावदेता**न्निरीक्षेऽहम् । (१.२२)
**आश्चर्यवच्चैन**मन्यः शृणोति । (२.२९)
**धर्म्याद्धि युद्धाच्छ्रेयः** । (२.३१)
**क्रोधाद्भवति** सम्मोहः । २.६३)
**सम्यगुभयो**र्विन्दते फलम् । (५.४)

एतेषु स्थूलाक्षरैः मुद्रितेषु पदेषु –

यच्छ्रेयः = यत् + श्रेयः (त् → च् , श् → छ्)
स्यान्निश्चितम् = स्यात् + निश्चितम् (त् → न्)
तन्मे = तत् + मे (त् → न्)
यावदेतान् = यावत् + एतान् (त् → द्)
आश्चर्यवच्च = आश्चर्यवत् + च (त् → च्)
धर्म्याद्धि = धर्म्यात् + हि (त् → द् , ह् → ध्)
क्रोधाद्भवति = क्रोधात् + भवति (त् → द्)
युद्धाच्छ्रेयः = युद्धात् + श्रेयः (त् → च् / श्→ छ्)
सम्यगुभयोः = सम्यक् + उभयोः (क् → ग्)

एतानि सर्वाणि व्यञ्जनसन्धेः उदाहरणानि सन्ति । अधुना वयं व्यञ्जनसन्धेः ज्ञानं प्राप्नवाम ।

एतां कथां सावधानं पठत –

दण्डकारण्ये **कश्चन** (कस् + चन) व्याधः वसति स्म । सः प्रतिदिनम् **तस्मिन्नेव** (तस्मिन् + एव) अरण्ये मृगयां करोति स्म । मृगाणां मांसं चर्म च विक्रीय जीवनं करोति स्म ।

एकदा अरण्यं गतः व्याधः तत्र **मार्गभ्रष्टः** (मार्गभ्रष् + तः) अभवत् । अत्यन्तम् **अन्विष्यन्नपि** (अन्विष्यन् + अपि) सः मार्गं न ज्ञातवान् । इतस्ततः अटनेन एव सायङ्कालः जातः । तदा अकस्मात् **कुतश्चित्** (कुतस् + चित्) आगतः कश्चन व्याघ्रः व्याधस्य मार्गम् अवरुद्धवान् । भीतः व्याधः तत्रैव समीपे विद्यमानं **कञ्चित्** (कम् + चित्) वृक्षम् आरूढवान् । वृक्षस्य शाखायां कश्चन भल्लूकः उपविष्टः आसीत् । तं दृष्ट्वा व्याधः कम्पमानः **किङ्कर्तव्यतामूढः** (किम् + कर्तव्यतामूढः) सन् तत्रैव शाखायाम् उपविष्टवान् । तदा भल्लूकः व्याधं सान्त्वयन् – "भोः मित्र ! भीतो मा भव । अहं भवतः रक्षणं करोमि" इत्युक्तवान् ।

व्याधः भल्लूकः यत्र उपविष्टवान् आसीत् **तच्छाखायाम्** (तत् + शाखायाम्) एव उपविष्टवान् । तदा भल्लूकः

''इदानीं भवान् **निश्चिन्ततया** (निस् + चिन्ततया) निद्रां करोतु । अहं रक्षणं करोमि । यामे व्यतीते अहं निद्रां करोमि । भवान् रक्षणं करोतु '' इत्युक्तवान् । ततः व्याधः निद्रां **कुर्वन्नवर्तत** (कुर्वन् + अवर्तत) ।

चन्द्रकिरणाः सर्वत्र प्रसृता आसन् । वृक्षस्य अधः व्याघ्रः व्याधस्य अवतरणं सम्भावयन् आसीत् । सः भल्लूकम् अवदत् – '' भोः मित्र ! आवां मृगौ । अयं व्याधस्तु अस्माकं वैरी । भवान् इदानीं तस्य रक्षणं करोति चेदपि श्वः सः भवन्तं मारयेत् । अतः तम् अधः पातयतु'' इति ।

भल्लूकः उक्तवान् –''मित्र ! यदि शरणम् आगतं मुञ्चामि तर्हि इह लोके अपख्यातिः भवेत् । परलोकेऽपि दुर्गतिः भवेत् । अतः **एनन्न** (एनम् + न) मुञ्चामि'' इति । कश्चन कालः अतीतः । व्याधः जागरितः । इदानीं भल्लूकः **पर्णच्छायायां** (पर्ण + छायायां) निद्राम् अकरोत् । तदा व्याघ्रः व्याधम् उक्तवान् – ''रे मूढ ! मत्तः भीतः भवान् भल्लूकं शरणं गतवान् किम् ? सः भवतः शत्रुः । मम निर्गमनमेव सः प्रतीक्षते । **तदनन्तरं** (तत् + अनन्तरं) भवन्तं मारयति । अतः जागरणात् पूर्वमेव भवान् तम् अधः पातयतु'' इति । व्याघ्रस्य वचनं श्रुत्वा कृतघ्नः व्याधः निद्रामग्नं भल्लूकम् अधः पातितवान् । भल्लूकस्तु **पतन्नेव** (पतन् + एव ) जागरितः काञ्चित् शाखाम् अवलम्ब्य पुनः वृक्षम् आरुह्य उपविष्टवान् । भल्लूकं दृष्ट्वा व्याधः भयेन कम्पते स्म । तदा भल्लूकः उक्तवान् – ''व्याध ! भयं मास्तु । यद्यपि भवान् कृतघ्नः तथापि अहं न मारयामि '' इति । तद् दृष्ट्वा व्याघ्रः उक्तवान् – ''भवान् तस्य रक्षणं कृतवान् **चेदपि** (चेत् + अपि ) सः भवन्तमेव मारयितुम् उद्युक्तः । तं कृतघ्नम् अधः पातयतु'' इति । तदा भल्लूकः उक्तवान् – ''सखे ! अपकारिभ्यः विवेकिनः न कुप्येयुः । न वा प्रतिविधानम् आचरेयुः । अपकारिणामपि उपकारः एव कर्तव्यः इति नीतिः । तस्मादहम् न मुञ्चामि'' इति । ततः व्याघ्रेण बहुधा प्रार्थितः अपि सः तद्वचनम् अवधीर्य आप्रभातं व्याधं रक्षितवान् ।

*एतस्यां कथायां स्थूलाक्षरैः मुद्रितानि व्यञ्जनसन्धियुक्तानि पदानि सन्ति । आवरणे सन्धिविभागः अपि दर्शितः अस्ति ।*

## व्यञ्जनसन्धिः

व्यञ्जनसन्धेः बहवः नियमाः सन्ति। अत्र तेषु केचित् नियमाः विवृताः सन्ति। तान् सर्वान् सावधानं पठत –

१. **श्चुत्वसन्धिः** (श् च् छ् ज् झ् ञ्)

**अ)** एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. शिशुस्[१] + शेते | = शिशु + स् + श् + एते | |
| | = शिशु + श् + श् + एते | = शिशुश्शेते |
| २. पाण्डवास्[२] + च | = पाण्डवा + स् + च् + अ | |
| | = पाण्डवा + श् + च् + अ | = पाण्डवाश्च (१.१) |
| ३. रामस् + छात्रः | = राम + स् + छ् + आत्रः | |
| | = राम + श् + छ् + आत्रः | = रामश्छात्रः |

एतेषु उदाहरणेषु सकारात् परतः शकारचवर्गौ वर्णौ स्तः। तत्र सकारस्य स्थाने शकारादेशः सम्पन्नः।

**आ)** एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. भगवत् + शक्तिः | = भगव + त् + श् + अक्तिः | |
| | = भगव + च् + श् + अक्तिः | = भगवच्शक्तिः / भगवच्छक्तिः[३] |
| २. आश्चर्यवत् + च | = आश्चर्यव + त् + च् + अ | |
| | = आश्चर्यव + च् + च् + अ | = आश्चर्यवच्च (२.२९) |
| ३. जगत् + छत्रम् | = जग + त् + छ् + अत्रम् | |
| | = जग + च् + छ् + अत्रम् | = जगच्छत्रम् |
| ४. यद् + जुहोषि | = य + द् + ज् + उहोषि | |
| | = य + ज् + ज् + उहोषि | = यज्जुहोषि (९.२७) |
| ५. पश्यन् + शृण्वन् | = पश्य + न् + श् + ऋण्वन् | |
| | = पश्य + ञ् + श् + ऋण्वन् | |
| | = पश्य + ञ् + छ्[३] + ऋण्वन् | = पश्यञ्छृण्वन् (५.८) |
| ६. यज्ञात् + ज्ञानयज्ञः | = यज्ञा + त् + ज् + ञानयज्ञः | |
| | = यज्ञा + ज् + ज् + ञानयज्ञः | = यज्ञाज्ज्ञानयज्ञः (४.३३) |

एतेषु उदाहरणेषु तवर्गात् परतः शकारचवर्गौ स्तः। तत्र तवर्गस्य स्थाने चवर्गः आदेशः सम्पन्नः। तत्र तकारादीनां चकारादयः यथासंख्यम् आदेशाः भवन्ति।

---

१. शिशुः + शेते = शिशु + ः + श् + एते (अत्र विसर्गसन्धेः निमित्तम् अस्ति)
= शिशु + स् + श् + एते (विसर्गस्य सकारादेशः)

२. पाण्डवाः + च = पाण्डवा + ः + च् + अ (अत्रापि विसर्गसन्धेः निमित्तम् अस्ति) = पाण्डवा + स् + च् + अ (विसर्गस्य सकारादेशः)

३. शकारस्य छकारो भवति विकल्पेन।

अतः शकारचवर्गाभ्यां योगे[1] सकारस्य शकारः, शकारचवर्गाभ्यां योगे तवर्गस्य चवर्गः आदेशो भवति ।

**निषेधः** – शकारात् परस्य तवर्गस्य चुत्वं न भवति । यथा –

विश् + नः = विश्नः प्रश् + नः = प्रश्नः

अस्मिन् सन्धौ 'श् /चवर्गः(चु)' इत्येतौ आदेशौ भवतः । अतः **श्चुत्वसन्धिः** इति नाम ।

**अभ्यासः**

३. १. सन्धिं कुरुत –

१. हरिस् + शेते = ______

२. स्याद् + जनार्दन (१.३६) = ______

३. बृहत् + छिद्रम् = ______

४. यत् + चन्द्रमसि (१५.१२) = ______

५. मृत् + शकटिका = ______

६. योगात् + चलितमानसः (६.३७) = ______

७. उद् + ज्वलति = ______

८. स्वपन् + श्वसन् (५.८) = ______

९. हे विद्यार्थिन् + जानीहि = ______

१०. सत् + चित् = ______

## २. ष्टुत्वसन्धिः

अ) एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. बृहत् + टीका | = बृह + त् + ट् + ईका | |
| | = बृह + ट् + ट् + ईका | = बृहट्टीका |
| २. तद् + डमरुः | = त + द् + ड् + अमरुः | |
| | = त + ड् + ड् + अमरुः | = तड्डमरुः |
| ३. आकृष् + तः | = आकृ + ष् + त् + अः | |
| | = आकृ + ष् + ट् + अः | = आकृष्टः |
| ४. इष् + तः | = इ + ष् + त् + अः | |
| | = इ + ष् + ट् + अः | = इष्टः (१८.६४) |

१. योगः = सम्बन्धः । अतः सकारतवर्गाभ्यां परौ एव शकारचवर्गौ भवेतामिति न नियमः । तस्मात् ताभ्यां तयोः परयोः इति नार्थः, किन्तु सम्बन्धमात्रम् । सम्बन्धश्च पूर्वस्य परेण इव परस्य पूर्वेणापि भवितुमर्हति ।

५. विस् + थितम् = वि + स् + थितम् = वि + ष् + थितम्[1]
= वि + ष् + थ् + इतम् = वि + ष् + ठ् + इतम् = विष्ठितम् (१३.१७)

**षकारटवर्गाभ्यां योगे सकारस्य षकारः, टवर्गेण योगे तवर्गस्य टवर्गादेशो भवति ।**

निषेधः –

१. तवर्गस्य षकारेण योगे ष्टुत्वं न भवति ।
यथा – भवान् + षष्ठः = भवान् षष्ठः । अत्र नकारस्य णकारादेशो न ।

२. पदान्तात् टवर्गात्परस्य सकारस्य तवर्गस्य च ष्टुत्वं न भवति ।
यथा – षट् + सन्तः = षट् सन्तः । अत्र सकारस्य षकारादेशो न ।
षट् + तरुणाः = षट् तरुणाः । अत्र तकारस्य टकारादेशो न ।
मधुलिड् + दीनः = मधुलिड् दीनः । अत्र दकारस्य डकारादेशो न ।

एतस्य निषेधः –
पदान्तात् टवर्गात् परेषां नाम्–नवति–नगरीशब्दानां नकारस्य ष्टुत्वं भवति ।

यथा – १. षण्[2] + नाम् = ष + ण् + न् + आम्
= ष + ण् + ण् + आम् = षण्णाम्
२. षण् + नवतिः = ष + ण् + न् + अवतिः
= ष + ण् + ण् + अवतिः = षण्णवतिः
३. षण् + नगर्यः = ष + ण् + न् + अगर्यः
= ष + ण् + ण् + अगर्यः = षण्णगर्यः

अस्मिन् सन्धौ षकारटवर्गौ इत्येतौ आदेशौ भवतः । अतः **ष्टुत्वसन्धिः** इति नाम ।

३. २. रिक्तस्थानानि पूरयत –

१. तत् + टीका = ________
२. शरद् + ________ = शरड्डम्बरः ।
३. उत् + ________ = उड्डङ्कनम्
४. पक्षिन् + टिट्टिभ = ________
५. स्याद् + ________ = स्याड्ढक्का
६. ________ + तः = आविष्टः (२.१)
७. धनवान् + षष्ठः = ________
८. ________ + टिप्पणी = सट्टिप्पणी
९. ________ + ________ = उड्डयनम्

---

१. उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् (पा.सू. ८.३.६५) इति सूत्रेण सस्य षः ।

२. अत्र अनुनासिकसन्धिवशात् टकारस्य णकारः ।

### ३. जश्त्वसन्धिः

अ) एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. तत् + अस्माकम् | = त + त् + अ + स्माकम् | |
| | = त + द् + अ + स्माकम् | = तदस्माकम् (१.१०) |
| २. स्यात् + आत्मतृप्तः | = स्या + त् + आ + त्मतृप्तः | |
| | = स्या + द् + आ + त्मतृप्तः | = स्यादात्मतृप्तः (३.१७) |
| ३. बलात् + इव | = बला + त् + इ + व | |
| | = बला + द् + इ + व | = बलादिव (३.३६) |
| ४. वाक् + ईशः | = वा + क् + ई + शः | |
| | = वा + ग् + ई + शः | = वागीशः |
| ५. सम्यक् + उभयोः | = सम्य + क् + उ + भयोः | |
| | = सम्य + ग् + उ + भयोः | = सम्यगुभयोः (५.४) |
| ६. एतत् + ऋतम् | = एत + त् + ऋ + तम् | |
| | = एत + द् + ऋ + तम् | = एतदृतम् (१०.१४) |

एतेषु उदाहरणेषु वर्गीयव्यञ्जनेभ्यः परतः स्वराः सन्ति । तत्र व्यञ्जनस्य स्थाने तत्तद्वर्गीयतृतीयव्यञ्जनम् आदेशो भवति ।

आ) एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. पृथक् + बालाः | = पृथ + क् + ब् + आलाः | |
| | = पृथ + ग् + ब् + आलाः | = पृथग्बालाः (५.४) |
| २. सम्यक् + व्यवसितः | = सम्य + क् + व् + यवसितः | |
| | = सम्य + ग् + व् + यवसितः | = सम्यग्व्यवसितः (९.३०) |
| ३. यत् + गत्वा | = य + त् + ग् + अत्वा | |
| | = य + द् + ग् + अत्वा | = यद्गत्वा (१५.६) |
| ४. बलवत् + दृढम् | = बलव + त् + द् + ऋढम् | |
| | = बलव + द् + द् + ऋढम् | = बलवद्दृढम् (६.३४) |
| ५. बुद्धियोगात् + धनञ्जय | = बुद्धियोगा + त् + ध् + अनञ्जय | |
| | = बुद्धियोगा + द् + ध् + अनञ्जय | = बुद्धियोगाद्धनञ्जय (२.४९) |
| ६. स्मृतिभ्रंशात् + बुद्धिनाशः | = स्मृतिभ्रंशा + त् + ब् + उद्धिनाशः | |
| | = स्मृतिभ्रंशा + द् + ब् + उद्धिनाशः | = स्मृतिभ्रंशाद्बुद्धिनाशः (२.६३) |
| ७. केचित् + भीताः | = केचि + त् + भ् + ईताः | |
| | = केचि + द् + भ् + ईताः | = केचिद्भीताः |

८. एतत् + योनीनि = एत + त् + य् + ओनीनि
= एत + द् + य् + ओनीनि = एतद्योनीनि (७.६)

९. यत् + राज्यसुखलोभेन = य + त् + र् + आज्यसुखलोभेन
= य + द् + र् + आज्यसुखलोभेन = यद्राज्यसुखलोभेन (१.४५)

१०. अप् + धिः = अ + प् + ध् + इः
= अ + ब् + ध् + इः = अब्धिः

एतेषु उदाहरणेषु वर्गीयव्यञ्जनेभ्यः परतः मृदुव्यञ्जनानि सन्ति। तत्र व्यञ्जनस्य स्थाने तद्वर्गीयतृतीयव्यञ्जनम् आदेशः सम्पन्नः।

इ) एतानि उदाहरणानि परिशीलयत –

१. स्यात् + जनार्दन = स्या + त् + ज् + अनार्दन (श्चुत्वसन्धेः निमित्तम् अस्ति)
= स्या + च् + ज् + अनार्दन (श्चुत्वसन्धिः, जश्त्वसन्धेः निमित्तम् अस्ति)
= स्या + ज् + ज् + अनार्दन (जश्त्वसन्धिः)
= स्याज्जनार्दन (१.३६)

२. यत् + ज्ञात्वा = य + त् + ज् + ञात्वा (श्चुत्वसन्धेः निमित्तम् अस्ति)
= य + च् + ज् + ञात्वा (श्चुत्वसन्धिः, जश्त्वसन्धेः निमित्तम् अस्ति)
= य + ज् + ज् + ञात्वा ( जश्त्वसन्धिः)
= यज्ज्ञात्वा (७.२)

एतेषु उदाहरणेषु श्चुत्वसन्धौ सति जश्त्वसन्धिः सम्पन्नः।

ई) एतानि उदारहरणानि परिशीलयत –

१. एतत् = एत + त् = एत + द् = एतद्
२. वाक् = वा + क् = वा + ग् = वाग्
३. लिट् = लि + ट् = लि +ड् = लिड्
४. एतद् = एत +द् = एत + त् = एतत्
५. वाग् = वा + ग् = वा + क् = वाक्
६. लिड् = लि + ड् = लि + ट् = लिट्

अत्र ञमङणनान् विना पदान्ते स्थितस्य वर्गीयप्रथमव्यञ्जनस्य अवसाने सति तद्वर्गीयं तृतीयं व्यञ्जनम् आदेशः सम्पन्नः। तृतीयस्य च प्रथमम्। अवसानं परत्र वर्णाभावः।

उ) एतानि उदारहरणानि परिशीलयत –

१. षष् + आननः = ष + ष् + आ + नानः
= ष + ड् + आ + ननः = षडाननः

२. षष् + भ्याम् = ष + ष् + भ् + याम्
= ष + ड् + भ् + याम् = षड्भ्याम्

३. द्विष् + भ्याम् = द्वि + ष् + भ् + याम्

= द्वि + ड् + भ् + याम् = द्विड्भ्याम्

अत्र पदान्ते स्थितस्य षकारस्य स्वरे मृदुव्यञ्जने वा परे डकारादेशो सम्पन्नः ।

ऊ) एतानि उदारहरणानि परिशीलयत –

१. षष् --> षट् / षड्

२. द्विष् -- > द्विट् / द्विड्

अत्र पदान्ते स्थितस्य षकारस्य टकारो डकारो वा सम्पन्नः ।

**अतः ञमङणनान् विना पदान्ते स्थितस्य वर्गीयव्यञ्जनस्य स्वरे मृदुव्यञ्जने (हशि) च परे तत्तद्वर्गीयतृतीयव्यञ्जनम् आदेशो भवति । अवसाने तु तत्तद्वर्गीयप्रथमव्यञ्जनस्य तृतीयव्यञ्जनम् आदेशो भवति । तृतीयस्य च प्रथमम् । पदान्तस्य षकारस्य डकारो भवति, अवसाने तु टकारो डकारो वा ।**

अस्मिन् सन्धौ वर्गीयतृतीयव्यञ्जनानि आदेशाः भवन्ति । तेषां च ग्रहणं 'जश्' प्रत्याहारेण भवति । अतः **जश्त्वसन्धिः** इति नाम ।

३. ३. रिक्तस्थानानि पूरयत –

१. वाक् + भूषणम् = ________

२. पृथक् + ________ = पृथग्भवति

३. मरुत् + वहति = ________

४. अपश्यत् + ________ = अपश्यद्देवदेवस्य (११.१३)

५. दिक् + अम्बरः = ________

६. ________ + ________ + ________ = भयाद्रणादुपरतम् (२.३५)

७. ________ + ________ = जगद्गुरुः

८. ________ + ________ = तस्माद्युध्यस्व (२.१८)

९. मधुलिट् + ________ = मधुलिड्यते

१०. ________ + वेदवित् + ________ = वेदान्तकृद्वेदविदेव (१५.१५)

## ४. चर्त्वसन्धिः

अ) एतानि उदाहरणानि परिशीलयत –

१. षड् + कोनः = ष + ड् + क् + ओनः

= ष + ट् + क् + ओनः = षट्कोनः

२. दिग् + पालः = दि + ग् + प् + आलः

= दि + क् + प् + आलः = दिक्पालः

३. अस्मद् + पुत्रः = अस्म + द् + प् + उत्रः
= अस्म + त् + प् + उत्रः = अस्मत्पुत्रः

४. अनुष्टुभ् + छन्दः = अनुष्टु + भ् + छ् + अन्दः
= अनुष्टु + प् + छ् + अन्दः = अनुष्टुप्छन्दः

**अतः ञमङणनान् विना वर्गीयव्यञ्जनस्य कर्कशव्यञ्जने (खरि) परे तद्वर्गीयप्रथमव्यञ्जनम् (चर्) आदेशो भवति ।**

अस्मिन् सन्धौ 'चर्' वर्णाः आदेशाः भवन्ति, अतः **चर्त्वसन्धिः** इति नाम ।

३. ४. मञ्जूषायां निर्दिष्टेषु पदेषु उचितपदं चित्वा रिक्तस्थानानि पूरयत –

| विपद्, त्रिष्टुभ्, तुराषाड्, कामधुग्, षड्, सम्पद्, कर्म, केलिः, पुत्रः, पुरुषः |
|---|

१. सम्पद् + ________ = सम्पत्पुत्रः
२. ________ + खाद्यानि = षट् खाद्यानि
३. ________ + खादति = कामधुक्खादति
४. तादृग् + ________ = तादृक्कर्म
५. ________ + प्रतिकारः = विपत्प्रतिकारः
६. विराड् + ________ = विराट्पुरुषः
७. ________ + प्रतीक्षा = सम्पत्प्रतीक्षा
८. ________ + सर्वः = तुराषाट् सर्वः
९. वाग् + ________ = वाक्केलिः
१०. ________ + छन्दः = त्रिष्टुप्छन्दः

## ५. अनुनासिकसन्धिः

**अ)** एतानि उदाहरणानि परिशीलयत –

१. ईदृग् + मम = ईदृ + ग् + म् + अम
= ईदृ + ङ् / ग् + म् + अम = ईदृङ्मम(११.४९)/ ईदृग्मम[1]

२. तस्माद् + न = तस्मा + द् + न् + अ
= तस्मा + न् / द् + न् + अ = तस्मान्न (१.३७)/ तस्माद्न[1]

३. सुहृद् + मित्र = सुहृ + द् + म् + इत्र
= सुहृ + न् / द् + म् + इत्र = सुहृन्मित्र (६.९)/ सुहृद्मित्र[1]

४. वाग् + मूलम् = वा + ग् + म् + ऊलम्
= वा + ङ् / ग् + म् + ऊलम् = वाङ्मूलम् / वाग्मूलम्[1]

१. एतादृशानां शब्दानां प्रयोगः विरलः।

एतेषु उदाहरणेषु वर्गीयव्यञ्जनेभ्यः परतः अनुनासिकव्यञ्जनम् अस्ति। तत्र वर्गीयव्यञ्जनानां स्थाने तद्वर्गीयः पञ्चमः वर्णः (अनुनासिकः) विकल्पेन आदेशः सम्पन्नः।

आ) एते उदाहरणे परिशीलयत –

१. चिद् + मयम् = चि + द् + म् + अयम्
= चि + न् + म् + अयम् = चिन्मयम्

२. तद् + मात्रम् = त + द् + म् + आत्रम्
= त + न् + म् + आत्रम् = तन्मात्रम्

एतयोः उदाहरणयोः वर्गीयव्यञ्जनात् परतः प्रत्ययस्य अनुनासिकव्यञ्जनम् अस्ति। तत्र वर्गीयव्यञ्जनस्य स्थाने तत्तद्वर्गीयपञ्चमो वर्णो (अनुनासिकः) नित्यम् आदेशः सम्पन्नः।

**अतः अनुनासिकव्यञ्जनेषु परेषु पदान्ते स्थितानां वर्गीयव्यञ्जनानां तद्वर्गीयः पञ्चमो वर्णो (अनुनासिकः) विकल्पेन आदेशो भवति। अनुनासिकादौ प्रत्यये परे तु नित्यमेव अनुनासिको भवति।**

अस्मिन् सन्धौ अनुनासिकः आदेशः भवति। अतः **अनुनासिकसन्धिः** इति नाम।

३. ५. सन्धिं कुरुत –

१. अनारम्भात् + नैष्कर्म्यम् = ________ / ________ (३.४)
२. वाग् + नियमः = ________ / ________
३. मृद् + मयम् = ________
४. तस्मात् + मनुष्येषु = ________ / ________ (१८.६९)
५. षड् + मुखः = ________ / ________
६. कश्चिद् + माम् = ________ / ________ (७.३)
७. विश्वराड् + नमति = ________ / ________
८. प्रसादात् + मया = ________ / ________ (१८.७३)
९. त्वग् + मोचनम् = ________ / ________
१०. अनादित्वात् + निर्गुणत्वात् = ________ / ________ (१३.३१)

६. **अनुस्वारसन्धिः –**

अ) एतानि उदाहरणानि परिशीलयत –

१. सम् + जयः = सं + जयः = संजयः (१.१)
२. पाण्डवानीकम् + व्यूढम् + दुर्योधनः = पाण्डवानीकं व्यूढं दुर्योधनः (१.२)
३. एताम् + पाण्डुपुत्राणाम् = एतां पाण्डुपुत्राणाम् (१.३)

एतेषु उदाहरणेषु पदान्तात् मकारात् परतः व्यञ्जनम् अस्ति। तत्र मकारस्य स्थाने अनुस्वारः आदेशः सम्पन्नः।

आ) एते उदाहरणे परिशीलयत –

१. वासान् + सि = वासांसि (२.२२)
२. आक्रम् + स्यते = आक्रंस्यते

एतयोः उदाहरणयोः अपदान्तात् मकारात् नकारात् वा परतः सकारः (झल्) अस्ति। तत्र मकारस्य नकारस्य वा स्थाने अनुस्वारः आदेशः सम्पन्नः।

**अतः व्यञ्जने परे पदान्ते स्थितस्य मकारस्य अनुस्वारो भवति। ञमङणनान् वर्जयित्वा वर्गीयव्यञ्जनेषु शषसहेषु च (झलि) परेषु अपदान्ते स्थितस्य नकारस्य मकारस्य च अनुस्वारो भवति।**

अस्मिन् सन्धौ अनुस्वारः आदेशः भवति। अतः **अनुस्वारसन्धिः** इति नाम।

३. ६ सन्धिं कुरुत -

१. महतीम् + चमूम् = ____________ / ____________ (१.३)

२. अस्माकम् + तु = ____________ / ____________ (१.७)

३. अपर्याप्तम् +तद् = ____________ / ____________ (१.१०)

४. यशान् +सि = ____________

५. स्रन् + सते = ____________ (१.३०)

६. रम् + स्यते = ____________

## ७. परसवर्णसन्धिः -

**अ)** एतानि उदाहरणानि परिशीलयत -

१. अं + कितः = अ + ङ् + क् + इतः = अङ्कितः

२. भुं + जते = भु + ञ् + ज् + अ + ते = भुञ्जते

३. मुं + चति = मु + ञ् + च् + अ + ति = मुञ्चति

४. लुं + ठति = लु + ण् + ठ् + अ + ति = लुण्ठति (२.११)

५. अविकं + पेन = अविक + म् + प + एन = अविकम्पेन (१०.७)

एतेषु उदाहरणेषु अपदान्तात् अनुस्वारात् परतः वर्गीयव्यञ्जनम् अस्ति। तस्मिन् परे अनुस्वारस्य स्थाने तद्वर्गस्य पञ्चमः वर्णः आदेशः सम्पन्नः।

**आ)** एतानि उदाहरणानि परिशीलयत -

१. शुभं + करोति = शुभ + ङ् + क् + रोति/ शुभं + करोति
= शुभङ्करोति / शुभं करोति

२. महतीं + चमूम् = महती + ञ् + च् + अमूम् / महतीं + चमूम्
= महतीञ्चमूम् / महतीं चमूम् (१.३)

३. हृषीकेशं + तदा = हृषीकेश + न् + त् + अदा / हृषीकेशं + तदा
= हृषीकेशन्तदा / हृषीकेशं तदा (१.२१)

४. ज्वलनं + पतङ्गाः = ज्वलन + म् +प् + अतङ्गाः / ज्वलनं + पतङ्गाः
= ज्वलनम्पतङ्गाः / ज्वलनं पतङ्गाः(११.२९)

एतेषु उदाहरणेषु पदान्तात् अनुस्वारात् परतः वर्गीयव्यञ्जनम् अस्ति । तस्मिन् परे अनुस्वारस्य स्थाने तद्वर्गस्य पञ्चमः वर्णः आदेशः विकल्पेन सम्पन्नः ।

**इ)** एतानि उदाहरणानि परिशीलयत –

१. सं + यमः = सँय् / सं + यमः = सँय्यमः / संयमः
२. सं + वादम् = सँव् / सं + वादम् = सँव्वादम् / संवादम् (१८.७०)
३. सं + लापः = सँल् / सं + लापः = सँल्लापः / संलापः

एतेषु उदाहरणेषु पदान्तात् अनुस्वारात् परतः 'य्, व्, ल्' इत्येते वर्णाः सन्ति । तत्र अनुस्वारस्य स्थाने 'यँ्, वँ्, लँ्' इत्यादेशः विकल्पेन सम्पन्नः ।

**ई)** एते उदाहरणे परिशीलयत –

१. श्रद्धावान् + लभते = श्रद्धावा + न् + ल् + अभते
= श्रद्धावा + लँ् + ल् + अभते
= श्रद्धावाँल्लभते (४.३९)

२. आ ब्रह्मभुवनात् + लोकाः = आ ब्रह्मभुवना + त् + ल् + ओकाः
= आ ब्रह्मभुवना + ल् + ल् + ओकाः
= आ ब्रह्मभुवनाल्लोकाः (८.१६)

एतयोः उदाहरणयोः तवर्गात् परतः लकारः अस्ति । तत्र 'त् थ् द् ध्' इत्येतेषां वर्णानां स्थाने 'ल्' इत्यादेशः, नकारस्य 'लँ्' इत्यादेशः च सम्पन्नः ।

**अतः अनुस्वारस्य वर्गीयव्यञ्जने (ययि) परे तद्वर्गस्य पञ्चमो वर्णः आदेशो भवति । पदान्ते स्थितस्य अनुस्वारस्य तु विकल्पेन । यवलेषु परेषु तु यँ्, वँ्, लँ् इत्यादेशो भवति । तवर्गस्य लकारे परे लकारादेशो भवति । तत्र यदि नकारः तस्य अनुनासिकलकारो भवति ।**

अत्र पूर्वपदे अनुस्वारस्य स्थाने परवर्गीयसवर्णव्यञ्जनानि आदेशाः भवन्ति । अतः **परसवर्णसन्धिः** इति नाम ।

## ३. ७. रिक्तस्थानानि पूरयत –

१. पुण्यकृतान् + लोकान् = ________ (६.४१)
२. ________ + लोकान् = शुभाँल्लोकान् (१८.७१)
३. श्रुतिमत् + ________ = श्रुतिमल्लोके (१३.१३)
४. ________ + ________ = समन्ताल्लोकान् (११.३०)
५. अहम् + ________ = अहङ्कारः
६. प्रें + खा = ________
७. सं + गणकम् = ________
८. सं + बं + धः = ________
९. गृहं + गत्वा = ________
१०. वदन् + ________ = वदँल्लिखति

## ८. ङमुडागमसन्धिः -

अ) एतानि उदाहरणानि परिशीलयत -

१. प्रत्यङ् + आत्मा = प्रत्य + ङ् + आ + त्मा
= प्रत्य + ङ् + ङ् + आ + त्मा = प्रत्यङ्ङात्मा

२. सुगण् + ईशः = सुग + ण् + ई + शः
= सुग + ण् + ण् + ई + शः = सुगण्णीशः

३. गृह्णन् + उन्मिषन् = गृह्ण + न् + उ + न्मिषन्
= गृह्ण + न् + न् + उ + न्मिषन् = गृह्णन्नुन्मिषन् (५.९)

४. युञ्जन् + एवम् = युञ्ज + न् + ए + वम्
= युञ्ज + न् + न् + ए + वम् = युञ्जन्नेवम् ( ६.१५)

५. तपस्विन् + एहि = तपस्वि + न् + ए + हि
= तपस्वि + न् + न् + ए + हि = तपस्विन्नेहि

अत्र ह्रस्वात् परतः 'ङ् ण् न्' वर्णाः सन्ति। तेभ्यः परतः स्वराः सन्ति। स्वरात्पूर्वं क्रमात् 'ङ् ण् न्' इत्येते आगमाः सम्पन्नाः।

**अतः ह्रस्वात् परतः यः ङकारः णकारः नकारश्च अस्ति तदन्तात् पदात् स्वरे परे, तस्मात्पूर्वं क्रमात् ङ् ण् न् इत्येते आगमाः भवन्ति। ङ् ण् न् इत्येतेषां द्विरुच्चारणं भवतीति फलितोऽर्थः।**

ङम् प्रत्याहारेण 'ङ् ण् न्' इत्येतेषां ग्रहणं भवति। उट् इत्यत्र उकारः उच्चारणार्थः। 'ट्' इत्यस्य लोपः। ङम् + उट् = ङमुट् इति आगमः भवति। अतः **ङमुडागमसन्धिः** इति नाम।

३. ८. रिक्तस्थानानि पूरयत -

| | | |
|---|---|---|
| १. तिर्यङ् | + ________ | = तिर्यङ्ङत्र |
| २. ________ | + ________ | = विषीदन्निदम् (१.२८) |
| ३. ________ | + एव | = सर्वस्मिन्नेव |
| ४. उदङ् | + इह | = ________ |
| ५. ________ | + अपि | = अनिच्छन्नपि (३.३६) |
| ६. अपरस्मिन् | + ________ | = अपरस्मिन्नौषधे |
| ७. ________ | + ________ | = धारयन्नचलम् (६.१३) |
| ८. रुदन् | + ________ | = रुदन्नायातः |
| ९. सन् | + अव्ययात्मा | = ________ (४.६) |
| १०. ________ | + अपि | = निमिषन्नपि (५.९) |

## ९. पूर्वसवर्णसन्धिः –

अ) एतानि उदाहरणानि परिशीलयत –

१. धर्म्याद् + हि = धर्म्या + द् + ह् + इ
= धर्म्या + द् + ध् / ह् + इ = धर्म्याद्धि (२.३१) / धर्म्याद्हि

२. वणिग् + हसति = वणि + ग् + ह् + असति
= वणि + ग् + घ् / ह् + असति
= वणिग्घसति / वणिग्हसति

३. तद् + हितम् = त + द् + ह् + इतम्
= त + द् + ध् / ह् + इतम् = तद्धितम् / तद्हितम्

एतेषु उदाहरणेषु ञमङणनान् वर्जयित्वा वर्गीयव्यञ्जनानि सन्ति । तेभ्यः परतः हकारः अस्ति । तत्र हकारस्य तत्तद्वर्गीयचतुर्थव्यञ्जनं विकल्पेन आदेशः सम्पन्नः अस्ति ।

**अतः पदान्तात् वर्गीयतृतीयव्यञ्जनात् (जशः) परस्य हकारस्य, तत्तद्वर्गीयचतुर्थव्यञ्जनं विकल्पेन आदेशो भवति ।**

अत्र हकारस्य पूर्वसवर्णः आदेशः भवति । अतः **पूर्वसवर्णसन्धिः** इति नाम ।

### विशेषः –

उदुपसर्गात् परस्य स्थाधातोः स्तम्भ्धातोश्च आदौ स्थितस्य सकारस्य थकारादेशो भवति । यथा –

उत् + स्थानम् = उ + त् + स् + थानम्
= उ + त् + थ् + थानम् = उत्थ्थानम् / उत्थानम्[१]

उत् + स्तम्भनम् = उ + त् + स् + तम्भनम्
= उ + त् + थ् + तम्भनम् = उत्थ्तम्भनम् / उत्तम्भनम्

### ३. ९. सन्धिं कुरुत –

१. वाग् + हीनः = ________ / ________
२. जगद् + हितम् = ________ / ________
३. अब् + हासः = ________ / ________
४. गच्छद् + हास्यम् = ________ / ________
५. विड् + हसति = ________ / ________
६. सम्राड् + हरिद्राम् = ________ / ________
७. भवद् + हितरक्षकः = ________ / ________
८. सुहृद् + हृष्टः = ________ / ________

---

१. एकस्य थकारस्य लोपो भवति ।

## १०. छत्वसन्धिः -

अ) एतानि उदाहरणानि परिशीलयत -

| | | |
|---|---|---|
| १. यच् + शोकम्[१] | = य + च् + श् + ओकम् | |
| | = य + च् + छ् / श् + ओकम् | = यच्छोकम् (२.८)/यच्शोकम् |
| २. मधुलिट् + शेते | = मधुलि + ट् + श् + एते | |
| | = मधुलि + ट् + छ् / श् + एते | = मधुलिट्छेते / मधुलिट्शेते |
| ३. वाक् + शरः | = वा + क् + श् + अरः | |
| | = वा + क् + छ् / श् + अरः | = वाक्छरः/वाक्शरः |

एतेषु उदाहरणेषु पदान्ते स्थितेभ्यः वर्गीयप्रथमव्यञ्जनेभ्यः परतः शकारः अस्ति। तत्र शकारस्य छकारो विकल्पेन सम्पन्नः। शकारस्य छकारः स्वरेषु यरलवमनेषु च परेषु एव भवति। अन्यथा नैव। यथा - वाक् श्च्योतति।

**अतः पदान्ते स्थितात् तद्वर्गीयप्रथमव्यञ्जनात्परस्य शकारस्य छकारो विकल्पेन आदेशो भवति। किन्तु शकारात्परे स्वराः यरलवमनाश्च (अम्) भवेयुः।**

अस्मिन् सन्धौ छकारः आदेशः सम्पन्नः। अतः **छत्वसन्धिः** इति नाम।

३. १०. 'अ'स्तम्भे पूर्वपदानि सन्ति। 'ब' स्तम्भे परपदानि सन्ति। 'क' स्तम्भे संयुक्तपदानि सन्ति। यथोदाहरणम् उचितपदानि योजयत -

| 'अ' | 'ब' | 'क' |
|---|---|---|
| १. युद्धात् | शङ्करः | व्यासप्रसादाच्छ्रुतवान् (१८.७५)/व्यासप्रसादाच्श्रुतवान् |
| २. वाक् | श्मशानम् | शश्वच्छान्तिम् (९.३१)/ शश्वच्शान्तिम् |
| ३. विट् | श्रेयः | तस्माच्छास्त्रम् (१६.२४)/ तस्माच्शास्त्रम् |
| ४. व्यासप्रसादात् | शस्त्रम् | तच्छ्लाघनम् / तच्श्लाघनम् |
| ५. तत् | श्रुतवान् | विश्वराट्छास्ति / विश्वराट्शास्ति |
| ६. शश्वत् | श्मश्रु | विट्छङ्करः / विट्शङ्करः |
| ७. तस्मात् | शास्ति | युद्धाच्छ्रेयः (२.३१) / युद्धाच्श्रेयः |
| ८. अभवत् | श्लाघनम् | एतच्छ्मश्रु / एतच्श्मश्रु |
| ९. एतत् | शास्त्रम् | अभवच्छ्मशानम् / अभवच्श्मशानम् |
| १०. विश्वराट् | शान्तिम् | वाक्छस्त्रम् / वाक्शस्त्रम् |

१. यत् + शोकम् = य + त् + श् + ओकम् (श्चुत्वसन्धेः निमित्तम्) = य + च् + श् + ओकम् (श्चुत्वसन्धिः) = यच् + शोकम्

## ११. सत्वसन्धिः -

एतानि उदाहरणानि परिशीलयत -

१. अर्थकामान् + तु = अर्थकामा + न् + तु
= अर्थकामाँ / अर्थकामां + स् + तु
= अर्थकामाँस्तु / अर्थकामांस्तु (२.५)

२. प्रज्ञावादान् + च = प्रज्ञावादा + न् + च् + अ
= प्रज्ञावादाँ / प्रज्ञावादां + श् + च् + अ
= प्रज्ञावादाँश्च / प्रज्ञावादांश्च (२.११)

३. श्लोकान् + टीकाभिः = श्लोकाँष्टीकाभिः / श्लोकांष्टीकाभिः

अत्र नकारान्तात् पदात् परतः 'च् छ् ट् ठ् त् थ्' (छव्) इत्येते वर्णाः सन्ति। तत्र चछयोः परयोः नकारस्य शकारः, टठयोः परयोः षकारः, तथयोः परयोः सकारश्च आदेशो सम्पन्नः।

**अतः नकारान्तात् पदात् चछयोः परयोः नकारस्य शकारः, टठयोः परयोः षकारः, तथयोः परयोः सकारश्च आदेशो भवति, आदेशात् पूर्वत्र स्थितः स्वरः अनुनासिकः अनुस्वारयुक्तो वा भवति। किन्तु एतेभ्यः चछादिभ्यः परे स्वराः यरलवमनाश्च (अम्) भवेयुः।**

अस्मिन् सन्धौ सकारादेशो भवति। अतः **सत्वसन्धिः** इति नाम।

३. ११. सन्धिं कुरुत -

१. तान् + च = ______ / ______

२. अगतासून् + च = ______ (२.११)/ ______

३. सर्वान् + ठक्कुरान् = ______ / ______

४. एतान् + त्रीन् = ______ (१४.२१)/ ______

५. तान् + ठङ्कारान् = ______ / ______

६. विपरीतान् + च = ______ (१८.३२)/ ______

७. सखीन् + तथा = ______ (१.२६)/ ______

८. हतान् + त्वम् = ______ (११.३४)/ ______

## १२. यवलोपसन्धिः -

अ) एतानि उदाहरणानि परिशीलयत -

१. ते + इमे = त् + ए + इ + मे
= त् + अय् + इ + मे (यान्तवान्तादेशसन्धिः)
= त् + अय् / अ + इ + मे
= तयिमे / त इमे(१.३३)

| | |
|---|---|
| २. तस्मै + एतत् | = तस्म् + ऐ + ए + तत् |
| | = तस्म् + आय् + ए + तत् (यान्तवान्तादेशसन्धिः) |
| | = तस्म् + आय् / आ + ए + तत् |
| | = तस्मायेतत् / तस्मा एतत् |
| ३. गुरो + एहि | = गुरवेहि / गुर एहि |
| ४. उभौ + अपि | = उभावपि / उभा अपि |
| ५. बालाय् + इह | = बाला इह / बालायिह |
| ६. पुरुषाय् + गच्छन्ति | = पुरुषा गच्छन्ति |

अत्र पदान्ते अकारपूर्वः आकारपूर्वः वा यकारः वकारः वा अस्ति । तस्मात् परतः स्वरः अस्ति । तत्र यकारस्य वकारस्य वा विकल्पेन लोपः सम्पन्नः । लोपे कृते निमित्ते सत्यपि सन्धिः न भवति । यदि व्यञ्जनं परं नित्यं लोपः ।

**अतः पदान्ते विद्यमानस्य अकारपूर्वस्य आकारपूर्वस्य वा यकारस्य वकारस्य च स्वरे परे विकल्पेन लोपो भवति । व्यञ्जने परे तु नित्यम् । लोपे कृते निमित्तस्य सद्भावेऽपि स्वरसन्धिः न भवति ।**

अस्मिन् सन्धौ यकारवकारयोः लोपः भवति । अतः **यवलोपसन्धिः** इति नाम ।

३. १२. यथोदाहरणं रिक्तस्थानानि पूरयत –

**उदा. आश्चर्यवच्चैनमन्यः शृणोति – आश्चर्यवत् + च = आश्चर्यवच्च(२.२९) श्चुत्वसन्धिः**

| | | | | |
|---|---|---|---|---|
| १. असक्तं सर्वभृच्चैव | – सर्वभृत् + च | = ________ | (१३.१४) | ________ |
| २. सदसच्चाहमर्जुन | – ________ + च | = सदसच्च | (९.१९) | ________ |
| ३. द्रव्यमयाद्यज्ञात् | – ________ + ________ | = द्रव्यमयाद्यज्ञात् | (४.३३) | ________ |
| ४. वाग्देवता | – ________ + ________ | = वाग्देवता | | ________ |
| ५. पश्येदकर्मणि | – पश्येत् + ________ | = पश्येदकर्मणि | (४.१८) | ________ |
| ६. एतन्मे संशयं कृष्ण | – एतद् + मे | = ________ | (६.३९)/ | ________ |
| ७. स्यान्निश्चितम् | – स्यात् + ________ | = स्यान्निश्चितम् | (२.७) | ________ |

१३. यथोदाहरणं मञ्जूषायां प्रदत्तानां सन्धिपदानां छेदं कृत्वा स्तम्भेषु लिखत –

| | | | |
|---|---|---|---|
| **असच्च (९,१९)** | केचिद्विलग्ना (११.२७) | कुर्वन्नपि (५.७) | आश्चर्यवच्च (२.२९) |
| जगदव्यक्तमूर्तिना (९.४) | यदक्षरम् (८.११) | कश्चिद्दुर्गतिम् (६.४०) | कुर्वन्नाप्नोति (४.२१) |
| कस्मिन्नौषधे | योगाच्चलितमानसः(६.३७) | षण्मयूखाः | तन्निबध्नाति (१४.७) |
| लोकान्न (१२.१५) | सुहृन्नयति | महानुभावाञ्श्रेयः (२.५) | विद्यार्थिन्नधीष्व |

| श्चुत्वसन्धिः | जश्त्वसन्धिः | अनुनासिकसन्धिः | ङमुडागमसन्धिः |
| --- | --- | --- | --- |
| असत् + च | ________ | ________ | ________ |
| ________ | ________ | ________ | ________ |
| ________ | ________ | ________ | ________ |
| ________ | ________ | ________ | ________ |

३. १४. यथोदाहरणं सन्धेः अवस्थां पृथक् पृथक् प्रदर्शयत –

उदा. युध्दाच्छ्रेयः (२.३१)

युध्दात् + श्रेयः = युद्धा + त् + श् + रेयः

= युद्धा + च् + श् + रेयः (श्चुत्वसन्धिः)

= युद्धा + च् + छ् + रेयः (छत्वसन्धिः)

१. यज्जुहोषि (९.२७) = ________

= ________

= ________

२. स्याज्जनार्दन (१.३६) = ________

= ________

= ________

३. यज्ञाज्ज्ञानयज्ञः (४.३३) = ________

= ________

= ________

४. यच्छ्रद्धः (१७.३) = ________

= ________

= ________

५. तस्माच्छास्त्रम् (१६.२४) = ________

= ________

= ______________________

६. मृच्छकटिकम् = ______________________

= ______________________

= ______________________

७. सच्छब्दः (१७.२६) = ______________________

= ______________________

= ______________________

३. १५. यथोदाहरणं प्रतिसन्धिपदं विभज्य विजातीयपदं निर्णयत –

उदा. – तच्च (१८.७७), कस्माच्च (११.३७), पृथग्बालाः (५.४), यच्चन्द्रमसि (१५.१२), स्याज्जनार्दन (१.३६)

| | | |
|---|---|---|
| तच्च | = तत् + च | – श्चुत्वसन्धिः |
| कस्माच्च | = कस्मात् + च | – श्चुत्वसन्धिः |
| पृथग्बालाः | = पृथक् + बालाः | – जश्त्वसन्धिः |
| यच्चन्द्रमसि | = यत् + चन्द्रमसि | – श्चुत्वसन्धिः |
| स्याज्जनार्दन | = स्याद् + जनार्दन | – श्चुत्वसन्धिः |

'पृथग्बालाः' इति विजातीयपदम् ।

१. स्यादात्मतृप्तः (३.१७) = ______________________

योगाच्चलितमानसः (६.३७) = ______________________

सम्यगुभयोः (५.४) = ______________________

जगदाहुः (१६.८) = ______________________

तद्धाम (१५.६) = ______________________

______________________ इति विजातीयपदम् ।

२. तन्निबध्नाति (१४.८) = ______________________

स्यान्निश्चितम् (२.७) = ______________________

एतन्मे (६.३९) = ______________________

कृत्स्नविन्न (३.२९) = ______________________

पश्यन्नात्मनि (६.२०) = ______________________

______________________ इति विजातीयपदम् ।

३. धर्म्याद्धि (२.३१) = ______

प्रहसन्निव (२.१०) = ______

कुर्वन्नपि (५.७) = ______

धारयन्नचलम् (६.१३) = ______

युञ्जन्नेवम् (६.२८) = ______

______ इति विजातीयपदम्।

४. आ ब्रह्मभुवनाल्लोकाः (८,.१६) = ______

समन्ताल्लोकान् (११.३०) = ______

प्राप्य पुण्यकृताँल्लोकान् (६.४१) = ______

श्रुतिमल्लोके (१३.१३) = ______

सर्वविद्भजति (१५.१९) = ______

______ इति विजातीयपदम्।

५. उदासीनवदासीनम् (१४.२३) = ______

यच्छ्रेयः (५.१) = ______

तच्छक्यम् (११.४) = ______

सच्छब्दः (१७.२६) = ______

त्यागाच्छान्ति (१२.१२) = ______

______ इति विजातीयपदम्।

६. सखींस्तथा (१.२६) = ______

इमांस्त्वम् (१०.१६) = ______

प्रज्ञावादांश्च (२.११) = ______

विकारांश्च (१३.१९) = ______

तस्मान्न (१.३७) = ______

______ इति विजातीयपदम्।

# ४. अयिनस्टायिन उवाच

विसर्गसन्धिः

एतानि गीतावाक्यानि सावधानं पठत –

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः **स्थितधीर्मुनिरुच्यते** ॥ (२.५६)
**स्थितप्रज्ञस्तदो**च्यते । (२.५५)
मामकाः **पाण्डवाश्च** । (१.१)
**एवमुक्तो हृषीकेशो** गुडाकेशेन भारत । (१.२४)
**अन्तवन्त इमे** देहाः । (२.१८)
**अनाशिनोऽप्रमेयस्य** । (२.१८)

एतेषु स्थूलाक्षरैः मुद्रितानि पदानि परिशीलयत –

स्थितधीर्मुनिरुच्यते = स्थितधीः + मुनिः + उच्यते
स्थितप्रज्ञस्तदा = स्थितप्रज्ञः + तदा
पाण्डवाश्च = पाण्डवाः + च
एवमुक्तो हृषीकेशः = एवमुक्तः + हृषीकेशः
अन्तवन्त इमे = अन्तवन्तः + इमे
अनाशिनोऽप्रमेयस्य = अनाशिनः + अप्रमेयस्य

एतानि विसर्गसन्धेः उदाहरणानि । अधुना वयं विसर्गसन्धेः परिज्ञानं प्राप्नवाम ।

एतं प्रसङ्गं सावधानं पठत –

अलबर्ट अयिनस्टायिनमहोदयः relativity theory इति कञ्चित् सिद्धान्तं प्रतिष्ठापितवान् । एतस्य सिद्धान्तस्य अवगमने भौतिकशास्त्रस्य ज्ञानम् अत्यन्तम् आवश्यकं भवति । वस्तुतः भौतिकशास्त्रज्ञानाम् अपि एषः सिद्धान्तः **दुरवगम एव** (दुरवगमः + एव) । अयिनस्टायिनः एतं सिद्धान्तम् आविष्कृत्य कांश्चित् भौतिकशास्त्रज्ञान् सविस्तरं बोधितवान् । परन्तु तैः सः सिद्धान्तः न **अवगत एव** (अवगतः + एव) । 'एवं चेत् एतं सिद्धान्तं कथम् अवगमयानि' इति सः नितरां **चिन्तितोऽभवत्** (चिन्तितः + अभवत्) ।कदाचित् तस्य मनसि विशिष्टं किमपि उदाहरणं स्फुरितम् । सः चिन्तितवान् यत् – 'यदि एतेन उदाहरणेन अहं पाठयामि तर्हि नूनं सर्वे तं सिद्धान्तं ज्ञातुं शक्नुयुः' इति ।

ततः सः कञ्चित् छात्रगणम् आहूय तत्पुरतः घण्टात्रयं व्याख्यानम् अकरोत् । अन्ते च पृष्टवान् – "इदानीं **भवद्भिरेषः**(भवद्भिः +एषः) सिद्धान्तः अवगतः खलु ?" इति । कश्चिच्छात्रः किञ्चिद्धैर्येण उक्तवान् – "**भो महोदय !** (भोः + महोदय) भवान् सम्यगेव बोधितवान् । तथापि यदि भवान् **इतोऽपि** (इतः + अपि) किञ्चित् सरलीकृत्य बोधयेत् तर्हि अवश्यं वयम् अवगन्तुं शक्नुयाम" इति । तदा अयिनस्टायिनः अवदत् – "यदि अहम् इतोऽपि सरलीकरोमि तर्हि मम सिद्धान्तस्य का **गतिर्भवेत्** (गतिः + भवेत्)? एतद्विषये स्पष्टप्रतिपत्तये काञ्चित् कथां श्रावयामि । शृणुत" इति ।

ततः **अयिनस्टायिन उवाच** (अयिनस्टायिनः + उवाच) –

कश्चन अन्धः मार्गे केनचित् पङ्गुना मिलितः । परस्परं परिचयः यदा **जातस्तदा** (जातः + तदा ) **अन्धश्पङ्गुम्** (अन्धः + पङ्गुम्) अवदत् – "अहं भवन्तं मम स्कन्धेन वहामि । अहं भवतः पादयोः कार्यं निर्वहामि । भवान् मम नेत्रयोः कार्यं करोतु" इति । पङ्गुः अङ्गीकृतवान्। तौ सानन्दम् अटितवन्तौ । मार्गे पङ्गुः किञ्चित् उपाहारगृहं दृष्टवान् । तदा **तयोर्मध्ये** (तयोः + मध्ये) **एष संवादः**(एषः+ संवादः) प्रवृत्तः –

पङ्गुः – भो मित्र ! अत्र उपाहारगृहम् अस्ति । गत्वा दुग्धं पिबाव ।

अन्धः – साधु । किन्तु ममायं प्रश्नः अस्ति, किं नाम दुग्धम् ?

पङ्गुः – दुग्धं नाम श्वेतवर्णं किञ्चन पेयम् ।

अन्धः – अहं जलं पिबामि । अतः पेयम् इत्युक्ते किमिति जानामि । परन्तु श्वेतवर्णम् इत्युक्तम् । तत् किम्?

पङ्गुः – यत् हंसपिच्छस्य सदृशम् ।

अन्धः – मम शिरस्त्राणे पिच्छानि सन्ति । तत्स्पर्शेन अहं जानामि यत् पिच्छं नाम किमिति । तदस्तु, हंस इत्युक्तम् । तत् किम् ?

पङ्गुः – हंसः नाम **कश्चन** (कः + चन) पक्षी यस्य ग्रीवा वक्रा वर्तते ।

अन्धः – प्रातःकाले अहं पक्षिणां कूजनं शृणोमि । ग्रीवा तु ममापि अस्ति । तत्र किं नाम वक्रत्वम् ?

तदा **पङ्गुः किञ्चित्** (पङ्गुः + किञ्चित्) विचारं कृत्वा अन्धस्य हस्तं गृहीत्वा तं वक्रीकृत्य तस्यैव द्वितीयेन हस्तेन वक्रहस्तं स्पर्शयन् अवोचत्– "एतदस्ति वक्रत्वम्" इति । तदा **अन्ध आनन्देन** (अन्धः + आनन्देन) वक्रहस्तं स्पृशन् उक्तवान् – "इदानीम् अहं जानामि । दुग्धं नाम एतादृशम्" इति ।

कथायाः तात्पर्यम् एतदस्ति यत् – 'अन्धम् उद्दिश्य श्वेतवर्णः ज्ञापयितुं न शक्यः । अतः तादृशः प्रयत्नः न करणीयः' इति । तत् साधु खलु इदम् उच्यते भगवद्गीतायां श्रीकृष्णेन –

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोषयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥३.२६॥**

*एतस्मिन् पाठे स्थूलाक्षरैः मुद्रितानि विसर्गसन्धियुक्तानि पदानि सन्ति । आवरणे सन्धिविभागः अपि दर्शितः अस्ति ।*

## विसर्गसन्धिः

१. विसर्गः + स्वरः    २. विसर्गः + व्यञ्जनानि

विसर्गसन्धौ पञ्च विशेषाः सम्भवन्ति ।

१. सकारः

अ) एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. पाण्डवाः + च | = पाण्डवा + : + च् + अ | |
| | = पाण्डवा + स् + च् + अ | (सकारः) |
| | = पाण्डवा + श् + च् + अ | |
| | = पाण्डवाश्च (१.१)(श्चुत्वसन्धिः)[१] | |
| २. उत्तमः + छात्रः | = उत्तमश्छात्रः (श्चुत्वसन्धिः) | |
| ३. घोरः + ठङ्कारः | = घोरष्ठङ्कारः (ष्टुत्वसन्धिः) | |
| ४. दुर्योधनः + तदा | = दुर्योधन + : + त् + अदा | |
| | = दुर्योधन + स् + त् + अदा | = दुर्योधनस्तदा (१.२) |

यत्र परतः कखपफान् विना कर्कशव्यञ्जनानि भवन्ति तत्र विसर्गस्य सकारादेशः भवति ।

आ) एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. पयः + शीतलम् | = पय + : + श् + ईतलम् | |
| | = पय + स् / : + श् + ईतलम् | (विकल्पेन सकारः) |
| | = पय + श् /: + श् + ईतलम् | |
| | = पयश्शीतलम् (श्चुत्वसन्धिः)[२]/ पयःशीतलम् | |
| २. श्रीधरः + षष्ठः | = श्रीधरष्षष्ठः (ष्टुत्वसन्धिः)[२]/ श्रीधरःषष्ठः | |
| ३. भक्तः + सेवते | = भक्तस्सेवते / भक्तः सेवते | |

एतेषु उदाहरणेषु विसर्गात् परतः 'श् ष् स्' इत्येतानि व्यञ्जनानि सन्ति । तत्र विसर्गस्य सकारादेशः विकल्पेन सम्पन्नः ।

**तस्मात् विसर्गस्य तथयोः परयोः सकारः, चछयोः परयोः शकारः, टठयोः परयोः षकारः, शषस इत्येतेषु परेषु विकल्पेन क्रमात् शषसा आदेशा भवन्ति ।**

४. १. सन्धिं कुरुत –

१. ज्ञानिनः + तत्त्वदर्शिनः = ________________ (४.३४)

२. हनुमतः + छत्रम् = ________________

---

१. सकारादेशे सति 'च्छ्' इत्येतयोः परयोः श्चुत्वसन्धिः, 'ट्ठ्' इत्येतयोः परयोः ष्टुत्वसन्धिश्च भवति ।

२. सकारादेशे सति 'श्' इत्येतस्मिन् परे श्चुत्वसन्धिः, 'ष्' इत्येतस्मिन् परे ष्टुत्वसन्धिश्च भवति ।

३. शिरः + स्थिरम् = ________________ / ________________

४. ब्रह्मणः + त्रिविधः = ________________ (१७.२३)

५. भीष्मः + शेते = ________________ / ________________

६. कर्मयोगः + च = ________________ (५.२)

७. कृष्णः + ठक्कुरः = ________________

२. जिह्वामूलीयः उपध्मानीयश्च

अ) एतानि उदाहरणानि परिशीलयत –

१. एतैः + कुलघ्नानाम् = एतै ᳵ कुलघ्नानाम् / एतैः कुलघ्नानाम् (१.४३)

२. शब्दः + खे = शब्द ᳵ खे/शब्दः खे (७.८)

३. मामकाः + पाण्डवाः = मामका ᳵ पाण्डवाः / मामकाः पाण्डवाः (१.१)

४. कृपणाः + फलहेतवः = कृपणा ᳵ फलहेतवः / कृपणाः फलहेतवः (२.४९)

एतेषु उदाहरणेषु विसर्गात् परतः 'क् ख् प् फ्' इत्येतानि व्यञ्जनानि सन्ति। तत्र विसर्गस्य 'क् ख्' इत्येतयोः परयोः (ᳵ) जिह्वामूलीयादेशः, 'प् फ्' इत्येतयोः परयोः (ᳵ) उपध्मानीयादेशश्च विकल्पेन सम्पन्नः।

३. रेफः

अ) एतानि उदाहरणानि परिशीलयत –

१. निराशीः + अपरिग्रहः = निराशी + : + अ + परिग्रहः
= निराशी + र् + अ + परिग्रहः = निराशीरपरिग्रहः (६.१०)

२. बन्धुः + आत्मा = बन्धु + : + आ + त्मा
= बन्धु + र् + आ + त्मा = बन्धुरात्मा (६.५)

३. अघायुः + इन्द्रियारामः = अघायु + : + इ + न्द्रियारामः
= अघायु + र् + इ + न्द्रियारामः = अघायुरिन्द्रियारामः (३.१६)

४. अभिमन्युः + ईक्षते = अभिमन् + य् + उ + : + ई + क्षते
= अभिमन् + य् + उ + र् + ई + क्षते = अभिमन्युरीक्षते

५. मुनिः + उच्यते = मुनि + : + उ + च्यते
= मुनि + र् + उ + च्यते = मुनिरुच्यते (२.५६)

६. मतिः + ऊहते = मत् + इ + : + ऊ + हते
= मत् + इ + र् + ऊ + हते = मतिरूहते

७. दोषैः + एतैः = दोषै + : + ए + तैः
= दोषै + र् + ए + तैः = दोषैरेतैः (१.४३)

८. रविः + अंशुमान् = रवि + : + अं + शुमान्
= रवि + र् + अं + शुमान् = रविरंशुमान् (१०.२१)

एतेषु उदाहरणेषु विसर्गात् पूर्वम् 'अ आ' इत्येतौ विना स्वराः सन्ति। विसर्गात् परतः स्वराः सन्ति। तत्र विसर्गस्य रेफादेशः सम्पन्नः।

आ) एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. प्रकृतिजैः + गुणैः | = प्रकृतिजै + : + ग् + उणैः | |
| | = प्रकृतिजै + र् + ग् + उणैः | = प्रकृतिजैर्गुणैः (३.५) |
| २. प्रपश्यद्भिः + जनार्दन | = प्रपश्यद्भि + : + ज् + अनार्दन | |
| | = प्रपश्यद्भि + र् + ज् + अनार्दन | = प्रपश्यद्भिर्जनार्दन (१.३९) |
| ३. प्रकृतेः + ज्ञानवान् | = प्रकृते + : + ज्ञ् + आनवान् | |
| | = प्रकृते + र् + ज्ञ् + आनवान् | = प्रकृतेर्ज्ञानवान् (३.३३) |
| ४. तैः + दत्तान् | = तै + : + द् + अत्तान् | |
| | = तै + र् + द् + अत्तान् | = तैर्दत्तान् (३.१२) |
| ५. मृत्युः + ध्रुवम् | = मृत्यु + : + ध् + रुवम् | |
| | = मृत्यु + र् + ध् + रुवम् | = मृत्युर्ध्रुवम् (२.२७) |
| ६. निराशीः + निर्ममः | = निराशी + : + न् + इर्ममः | |
| | = निराशी + र् + न् + इर्ममः | = निराशीर्निर्ममः (३.३०) |
| ७. हविः + ब्रह्माग्नौ | = हवि + : + ब् + रह्माग्नौ | |
| | = हवि + र् + ब् + रह्माग्नौ | = हविर्ब्रह्माग्नौ (४.२४) |
| ८. कर्मफलहेतुः + भूः | = कर्मफलहेतु + : + भ् + ऊः | |
| | = कर्मफलहेतु + र् + भ् + ऊः | = कर्मफलहेतुर्भूः (२.४७) |
| ९. स्थितधीः + मुनिः | = स्थितधी + : + म् + उनिः | |
| | = स्थितधी + र् + म् + उनिः | = स्थितधीर्मुनिः (२.५६) |
| १०. हयैः + युक्ते | = हयै + : + य् + उक्ते | |
| | = हयै + र् + य् + उक्ते | = हयैर्युक्ते (१.१४) |
| ११. चिकीर्षुः + लोकसंग्रहम् | = चिकीर्षु + : + ल् + ओकसंग्रहम् | |
| | = चिकीर्षु + र् + ल् + ओकसंग्रहम् | = चिकीर्षुर्लोकसंग्रहम्(३.२५) |
| १२. एतैः + विमोहयति | = एतै + : + व् + इमोहयति | |
| | = एतै + र् + व् + इमोहयति | = एतैर्विमोहयति (३.४०) |
| १३. श्वेतैः + हयैः | = श्वेतै + : + ह् + अयैः | |
| | = श्वेतै + र् + ह् + अयैः | = श्वेतैर्हयैः (१.१४) |

एतेषु उदाहरणेषु विसर्गात् पूर्वम् 'अ आ' इत्येतौ विना स्वराः सन्ति। विसर्गात् परतः मृदुव्यञ्जनानि सन्ति। तत्र विसर्गस्य रेफादेशः सम्पन्नः।

इ) एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. बहिः + अन्तः | = बहि + : + अ + न्तः | |
| (अव्ययम्) | = बहि + र् + अ + न्तः | = बहिरन्तः (१३.१५) |
| २. पुनः + अत्र | = पुन + : + अ + त्र | |
| (अव्ययम्) | = पुन + र् + अ + त्र | = पुनरत्र |
| ३. प्रातः + गच्छति | = प्रात + : + ग् + अच्छति | |
| (अव्ययम्) | = प्रात + र् + ग् + अच्छति | = प्रातर्गच्छति |

एतेषु उदाहरणेषु अव्ययसम्बन्धिनः विसर्गात् परतः स्वरः, मृदुव्यञ्जनं वा अस्ति। तत्र विसर्गस्य रेफादेशः सम्पन्नः।

४. २. पदच्छेदं कुरुत –

| | | |
|---|---|---|
| १. सेनयोरुभयोरपि | = ______ + ______ + ______ | (१.२७) |
| २. अग्निर्ज्योतिरहः | = ______ + ______ + ______ | (८.२४) |
| ३. त्रिभिर्गुणमयैर्भावैः | = ______ + ______ + ______ | (७.१३) |
| ४. स्थितधीर्मुनिरुच्यते | = ______ + ______ + ______ | (२.५६) |
| ५. कर्मफलहेतुर्भूर्मा | = ______ + ______ + ______ | (२.४७) |
| ६. श्वेतैर्हयैर्युक्ते | = ______ + ______ + ______ | (१.१४) |
| ७. आरुरुक्षोर्मुनेर्योगम् | = ______ + ______ + ______ | (६.३) |
| ८. याभिर्विभूतिभिर्लोकान् | = ______ + ______ + ______ | (१०.१६) |
| ९. मुहुर्मुहुः | = ______ + ______ | (१८.७६) |
| १०. अन्तर्ज्योतिः | = ______ + ______ | |

४. लोपः

अ) एतानि उदाहरणानि परिशीलयत –

१. देवाः + अपि = देव् + आ + : + अ + पि
= देव् + आ + अ + पि / देव् + आ + य् + अ + पि
= देवा अपि (११.५२)[१] / देवायपि[२]

२. अपहृतज्ञानाः + आसुरम् = अपहृतज्ञान् + आ + : + आ + सुरम्

---

१. 'देवा अपि' इत्यत्र 'देव् + आ + अ + पि'। अतः स्वरसन्धेः निमित्तम् अस्ति। तथापि स्वरसन्धिः न कर्तव्यः। अतः 'देवा अपि' इत्येव रूपम्।

२. यकारोपेतस्य प्रयोगः विरलः।

= अपहृतज्ञान् + आ + आ + सुरम् /अपहृतज्ञान् +
आ + य् + आ + सुरम्
= अपहृतज्ञाना आसुरम् (७.१५)/अपहृतज्ञानायासुरम्

३. मणिगणाः + इव = मणिगण् + आ + : + इ + व
= मणिगण् + आ + इ + व / मणिगण् + आ + य् + इ + व
= मणिगणा इव (७.७)/मणिगणायिव

४. षण्मासाः + उत्तरायणम् = षण्मास् + आ + : + उ + त्तरायणम्
= षण्मास् + आ + उ + त्तरायणम् / षण्मास् +
आ + य् + उ + त्तरायणम्
= षण्मासा उत्तरायणम् (८.२४)/ षण्मासायुत्तरायणम्

५. कामोपभोगपरमाः + एतावत्
= कामोपभोगपरम् + आ + : + ए + तावत्
= कामोपभोगपरम् +आ + ए + तावत् / कामोपभोगपरम् +
आ + य् + ए + तावत्
= कामोपभोगपरमा एतावत् (१६.११)/ कामोपभोगपरमायेतावत्

६. देवाः + ऋषयः = देव् + आ + : + ऋ + षयः
= देव् + आ + ऋ + षयः / देव् + आ + य् + ऋ + षयः
= देवा ऋषयः / देवायृषयः

एतेषु उदाहरणेषु आकारात्परतः विसर्गो वर्तते । तस्माच्च परतः स्वराः सन्ति । तत्र विसर्गस्य यकारादेशः । विकल्पेन यकारस्य लोपः । लोपे सति प्रकृतिभावो भवति ।

**आ)** एतानि उदाहरणानि परिशीलयत –

१. गुणाः + गुणेषु = गुण् + आ + : + ग् + उणेषु
= गुण् + आ + ग् + उणेषु
= गुणा + गुणेषु
= गुणा गुणेषु

२. स्वर्गपराः + जन्मकर्मफलप्रदाम् = स्वर्गपर् + आ + : + ज् + अन्मकर्मफलप्रदाम्
= स्वर्गपर् + आ + ज् + अन्मकर्मफलप्रदाम्
= स्वर्गपरा + जन्मकर्मफलप्रदाम्
= स्वर्गपरा जन्मकर्मफलप्रदाम् (२.४३)

३. देवाः + दास्यन्ते = देव् + आ + : + द् +आस्यन्ते
= देव् + आ + द् +आस्यन्ते
= देवा + दास्यन्ते = देवा दास्यन्ते (३.१२)

| | |
|---|---|
| ४. पुरुषाः + धर्मस्य | = पुरुष् + आ + : + ध् + अर्मस्य |
| | = पुरुष् + आ + ध् + अर्मस्य |
| | = पुरुषा + धर्मस्य |
| | = पुरुषा धर्मस्य |
| ५. देहाः + नित्यस्य | = देह् + आ + : + न् + इत्यस्य |
| | = देह् + आ + न् + इत्यस्य |
| | = देहा + नित्यस्य |
| | = देहा नित्यस्य (२.१८) |
| ६. वितताः + ब्रह्मणः | = वितत् + आ + : + ब् + रह्मणः |
| | = वितत् + आ + ब् + रह्मणः |
| | = वितता + ब्रह्मणः |
| | = वितता ब्रह्मणः (४.३२) |
| ७. महेश्वासाः + भीमार्जुनसमाः | = महेश्वास् + आ + : + भ् + ईमार्जुनसमाः |
| | = महेश्वास् + आ + भ् + ईमार्जुनसमाः |
| | = महेश्वासा + भीमार्जुनसमाः |
| | = महेश्वासा भीमार्जुनसमाः (१.४) |
| ८. समवेताः + युयुत्सवः | = समवेत् + आ + : + य् + उयुत्सवः |
| | = समवेत् + आ + य् + उयुत्सवः |
| | = समवेता + युयुत्सवः |
| | = समवेता युयुत्सवः (१.१) |
| ९. धार्तराष्ट्राः + रणे | = धार्तराष्ट्र् + आ + : + र् + अणे |
| | = धार्तराष्ट्र् + आ + र् + अणे |
| | = धार्तराष्ट्रा + रणे = धार्तराष्ट्रा रणे (१.४६) |
| १०. कामकामाः + लभन्ते | = कामकाम् + आ + : + ल् + अभन्ते |
| | = कामकाम् + आ + ल् + अभन्ते |
| | = कामकामा + लभन्ते = कामकामा लभन्ते (९.२१) |
| ११. अर्हाः + वयम् | = अर्ह् + आ + : + व् + अयम् |
| | = अर्ह् + आ + व् + अयम् |
| | = अर्हा + वयम् = अर्हा वयम् (१.३७) |
| १२. बहुशाखाः + हि | = बहुशाख् + आ + : + ह् + इ |
| | = बहुशाख् + आ + ह् + इ |
| | = बहुशाखा + हि = बहुशाखा हि (२.४१) |

एतेषु उदाहरणेषु आकारात्परतः विसर्गो वर्तते। तस्माच्च परतः मृदुव्यञ्जनानि सन्ति। तत्र विसर्गस्य लोपः सम्पन्नः। लोपे सति प्रकृतिभावो भवति।

इ) एतानि उदाहरणानि परिशीलयत –

१. निर्योगक्षेमः + आत्मवान् = निर्योगक्षेम् + अ + : + आ + त्मवान्
= निर्योगक्षेम् + अ + आ + त्मवान्
= निर्योगक्षेम + आत्मवान् = निर्योगक्षेम आत्मवान् (२.४५)

२. अन्तवन्तः + इमे = अन्तवन्त् + अ + : + इ + मे
= अन्तवन्त् + अ + इ + मे
= अन्तवन्त + इमे = अन्तवन्त इमे (२.१८)

३. अव्ययः + ईश्वरः = अव्यय् + अ + : + ई + श्वरः
= अव्यय् + अ + ई + श्वरः
= अव्यय + ईश्वरः = अव्यय ईश्वरः (१५.१७)

४. धृतराष्ट्रः + उवाच = धृतराष्ट्र + र् + अ + : + उ + वाच
= धृतराष्ट्र + र् + अ + उ + वाच
= धृतराष्ट्र + उवाच = धृतराष्ट्र उवाच (१.१)

५. अतः + ऊर्ध्वम् = अत् + अ + : + ऊ + र्ध्वम्
= अत् + अ + ऊ + र्ध्वम्
= अत + ऊर्ध्वम् = अत ऊर्ध्वम् (१२.८)

६. ओङ्कारः + ऋक् = ओङ्कार् + अ + : + ऋ + क्
= ओङ्कार् + अ + ऋ + क्
= ओङ्कार + ऋक् = ओङ्कार ऋक् (९.१७)

७. यः + एनम् = य् + अ + : + ए + नम्
= य् + अ + ए + नम्
= य + एनम् = य एनम् (२.१९)

एतेषूदाहरणेषु अकारात्परतः विसर्गो वर्तते। तस्माच्च परतः अकारं विना अन्ये स्वराः सन्ति। तत्र विसर्गस्य लोपः।

ई) एतानि उदाहरणानि परिशीलयत –

१. एषः + आगच्छति = एष + : + आ + गच्छति
= एष + आ + गच्छति / एष + य् + आ + गच्छति
= एष आगच्छति / एषयागच्छति[1]

१. यकारोपेतस्य प्रयोगः विरलः।

२. सः + उच्यते = स + : + उ + च्यते
= स + उ + च्यते / स + य् + उ + च्यते[1]
= स उच्यते (३.६)/ सयुच्यते

३. सः + एव = स + : + ए + व
= स + ए + व / स + य् + ए + व
= स एव (४.३) / सयेव

एतेषु उदाहरणेषु 'एषः', 'सः' इति पदद्वये विसर्गात् परतः अकारं विना अन्ये स्वराः सन्ति। अतः विसर्गस्य यकारादेशः सम्पन्नः । विकल्पेन यकारस्य लोपो भवति। लोपे सति प्रकृतिभावः।

उ) एतानि उदाहरणानि परिशीलयत –

| | | |
|---|---|---|
| १. एषः + वः | = एष + : + व् + अः | |
| | = एष + व् + अः[2] | |
| | = एष + वः | = एष वः (३.१०) |
| २. एषः + ज्ञानम् | = एष + : + ज्ञ् + आनम् | |
| | = एष + ज्ञ् + आनम् | |
| | = एष + ज्ञानम् | = एष ज्ञानम् (३.४०) |
| ३. सः + कौन्तेयः | = स + : + क् + औन्तेयः | |
| | = स + क् + औन्तेयः | |
| | = स + कौन्तेयः | = स कौन्तेयः (१.२७) |
| ४. सः + घोषः | = स + घोषः | = स घोषः (१.१९) |
| ५. सः + च | = स + च | = स च (६.३०) |
| ६. सः + तया | = स + तया | = स + तया (७.२२) |
| ७. सः + परः | = स + परः | = स परः (८.२२) |
| ८. सः + बुद्धिमान् | = स + बुद्धिमान् | = स बुद्धिमान् (४.१८) |
| ९. सः + भूयः | = स + भूयः | = स भूयः (१३.२३) |
| १०. सः + महात्मा | = स + महात्मा | = स महात्मा (७.१९) |
| ११. सः + जीवति | = स + जीवति | = स जीवति (३.१६) |
| १२. सः + युक्तः | = स + युक्तः | = स युक्तः (४.१८) |
| १३. सः + विस्मयाविष्टः | = स + विस्मयाविष्टः | = स विस्मयाविष्टः (११.१४) |
| १४. सः + शब्दः | = स + शब्दः | = स शब्दः (१.१३) |
| १५. सः + सर्वेषु | = स + सर्वेषु | = स सर्वेषु (८.२०) |

१. वस्तुतस्तु – स + स् + उच्यते = स + र् + उच्यते = स + य् + उच्यते = ..
२. वस्तुतस्तु – एष + स् + वः = एष + वः = ...

एतेषु उदाहरणेषु 'एषः', 'सः' इति पदद्वये विसर्गात् परतः व्यञ्जनानि सन्ति । तत्र विसर्गस्य लोपः सम्पन्नः ।

ऊ) एते उदाहरणे परिशीलयत –

| | | |
|---|---|---|
| १. कविः + रचयति | = कव् + इ + ः + र् + अचयति | |
| | = कव् + इ + र् + अचयति | (विसर्गस्य लोपः) |
| | = कव् + ई + र् + अचयति | (पूर्वस्वरस्य दीर्घः) |
| | = कवी + रचयति | = कवी रचयति |
| २. भानुः + राजते | = भान् + उ + ः + र् + आजते | |
| | = भान् + उ + र् + आजते | (विसर्गस्य लोपः) |
| | = भान् + ऊ + र् + आजते | (पूर्वस्वरस्य दीर्घः) |
| | = भानू + राजते | = भानू राजते |

एतयोः उदाहरणयोः अकारं विना अन्यस्वरात्परतः विसर्गो वर्तते । तस्माच्च परतः रेफः अस्ति । तत्र विसर्गस्य लोपः सम्पन्नः । पूर्वस्वरः दीर्घो भवति ।

ऋ) एतदुदाहरणं परिशीलयत –

| | | |
|---|---|---|
| ३. पुनः + रमते | = पुन् + अ + ः + र् + अमते | |
| | = पुन् + अ + र् + अमते | (विसर्गस्य लोपः) |
| | = पुन् + आ + र् + अमते | (पूर्वस्वरस्य दीर्घः) |
| | = पुना + रमते | = पुना रमते |

अत्र अव्ययसम्बन्धिनः विसर्गात् परतः रेफो वर्तते । तत्र (विसर्गात् पूर्वम् अकारे सत्यपि) विसर्गस्य लोपः सम्पन्नः । पूर्वस्वरः दीर्घो भवति ।

तस्मात् –

**१. आकारात्परस्य विसर्गस्य लोपो भवति स्वरे मृदुव्यञ्जने (अशि) च परे ।**

**२. अकारात्परस्य विसर्गस्य लोपो भवति अकारं विना स्वरे परे ।**

**३. 'एषः', 'सः' इति पदद्वये विसर्गस्य यकारदेशः भवति अकारं विना स्वरे परे । यकारस्य विकल्पेन लोपो भवति ।**

**४. 'एषः', 'सः' इति पदद्वये विसर्गस्य लोपो भवति व्यञ्जने परे ।**

**५. अकारं वर्जयित्वा अन्यस्मात् स्वरात्परस्य विसर्गस्य लोपो भवति रेफे परे । लोपे च कृते पूर्वस्वरः दीर्घः भवति ।**

**६. अव्ययसम्बन्धिनः विसर्गस्य लोपो भवति अकारात्परस्यापि रेफे परे । लोपे च कृते पूर्वस्वरः दीर्घः भवति ।**

४. ३. सन्धिं कुरुत –

१. अपहृतज्ञानाः + आसुरम् = ———— ———— (७.१५)/ ————
२. क्षेत्रज्ञः + इति = ———— ———— (१३.१) / ————
३. मद्भक्तः + एतत् = ———— ———— (१३.१८)/————
४. मणिगणाः + इव = ———— ———— (७.७)/ ————
५. लताः + एधन्ते = ———— ———— / ————
६. षण्मासाः + उत्तरायणम् = ———— ———— (८.२४)/ ————
७. मच्चित्ताः + मद्गतप्राणाः + बोधयन्तः = ———— ———— ———— (१०.९)
८. नित्ययुक्तः + एकभक्तिः = ———— ———— (७.१७)/ ————
९. सर्वारम्भाः + हि = ———— ———— (१८.४८)
१०. शूराः + महेश्वासाः + भीमार्जुनसमाः = ———— ———— ———— (१.४)

४. ४. सन्धिं कुरुत –

१. एषः + रजोगुणसमुद्भवः = ———— ———— (३.३७)
२. सः + विशिष्यते = ———— ———— (३.७)
३. सः + उत्तिष्ठति = ———— ———— / ————
४. सः + वेदवित् = ———— ———— (१५.१)
५. एषः + उदयः = ———— ———— / ————
६. यः + पश्यति = ———— ———— (५.५)
७. मुहुर्मुहुः + रोदिति = ———— ————
८. अन्तः + राज्यीयम् = ———— ————

५. उकारः

अ) एतानि उदाहरणानि परिशीलयत –

१. हृषीकेशः + गुडाकेशेन = हृषीकेश् + अ + ः + ग् + उडाकेशेन
= हृषीकेश् + अ + उ + ग् + उडाकेशेन
= हृषीकेश् + ओ + ग् + उडाकेशेन
= हृषीकेशो गुडाकेशेन (१.२४)

२. नः + जयेयुः = न् + अ + ः + ज् + अयेयुः
= न् + अ + उ + ज् + अयेयुः
= न् + ओ + ज् + अयेयुः
= नो जयेयुः (२.६)

| | |
|---|---|
| ३. बहवः + ज्ञानतपसा | = बहव् + अ + : + ज् + ञानतपसा |
| | = बहव् + अ + उ + ज् + ञानतपसा |
| | = बहव् + ओ + ज् + ञानतपसा |
| | = बहवो ज्ञानतपसा (४.१०) |
| ४. सौभद्रः + द्रौपदेयाः | = सौभद्रो द्रौपदेयाः (१.६) |
| ५. घोषः + धार्तराष्ट्राणाम् | = घोषो धार्तराष्ट्राणाम् (१.१९) |
| ६. सङ्करः + नरकाय | = सङ्करो नरकाय (१.४२) |
| ७. बद्धिनाशः + बुद्धिनाशात् | = बुद्धिनाशो बुद्धिनाशात् (२.६३) |
| ८. वासः + भवति | = वासो भवति (१.४४) |
| ९. ध्रुवः + मृत्युः | = ध्रुवो मृत्युः (२.२७) |
| १०. कुन्तीपुत्रः + युधिष्ठिरः | = कुन्तीपुत्रो युधिष्ठिरः (१.१६) |
| ११. नः + राज्येन | = नो राज्येन (१.३२) |
| १२. प्रवृद्धः + लोकान् | = प्रवृद्धो लोकान् (११.३२) |
| १३. युयुधानः + विराटः | = युयुधानो विराटः (१.४) |
| १४. उक्तः + हृषीकेशः | = उक्तो हृषीकेशः (१.२४) |

एतेषु उदाहरणेषु अकारात्परतः विसर्गो विद्यते। तस्माच्च परतः मृदुव्यञ्जनानि सन्ति। तत्र विसर्गस्य उकारादेशः सम्पन्नः। उकारे कृते गुणसन्धिः।

**आ )** एतद् उदाहरणं परिशीलयत –

| | |
|---|---|
| १. तुमुलः + अभवत् | = तुमुल् + अ + : + अ + भवत् |
| | = तुमुल् + अ + उ + अ + भवत् (उकारः) |
| | = तुमुल् + ओ + अ + भवत् (गुणसन्धिः) |
| | = तुमुल् + ओऽ + भवत् (पूर्वरूपसन्धिः) = तुमुलोऽभवत् (१.१३) |

एतस्मिन् उदाहरणे अकारात्परतः विसर्गो विद्यते। तस्माच्च परतः अकारः अस्ति। तत्र विसर्गस्य उकारादेशः सम्पन्नः। उकारे कृते गुणसन्धिः। ततः पूर्वरूपसन्धिः।

**तस्मात् अकारात्परस्य विसर्गस्य उकारो भवति अकारे मृदुव्यञ्जने (हशि) च परे। उकारे कृते गुणसन्धिः नित्यमेव भवति। अकारे परे तु ततो नित्यं पूर्वरूपसन्धिः इति विशेषः।**

**इदमवधेयम्** – निमित्ते सत्यपि अव्ययसम्बन्धिनः, ऋकारान्तशब्दसम्बोधनसम्बन्धिनः च विसर्गस्य उकारो न भवति।

यथा – १. पुनः + अत्र = पुनरत्र।

प्रातः + गच्छति = प्रातर्गच्छति।

२. हे पितः + अत्र = हे पितरत्र!

हे होतः + गच्छ = हे होतर्गच्छ!

## ४. ५. रिक्तस्थानानि पूरयत –

१. प्रकृतिस्थः + हि = ________ (१३.२१)
२. समिद्धः + अग्निः = ________ (४.३७)
३. ________ + ________ = इतरो जनः (३.२१)
४. श्रेयः + ________ = श्रेयोऽनुपश्यामि (१.३१)
५. दिशः + ________ = ________द्रवन्ति (११.३६)
६. ________ + ________ = सोऽविकम्पेन (१०.७)
७. पश्यतः + ________ = ________ मुनेः (२.६९)
८. ________ + ________ = सर्वतोऽक्षिशिरोमुखम् (१३.१३)
९. ________ + ________ = ध्यायतो विषयान् (२.६२)
१०. कूटस्थः + अक्षरः = ________ (१५.१६)

## ४. ६. अधोलिखिते श्लोके पदच्छेदं कुरुत। श्लोकं च तमवलम्ब्य यथोदाहरणं रिक्तस्थलानि पूरयत –

**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते।**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥१२.१२॥**

________, ________, ________, ________
________, ________, ________ ।
________, ________,
________, ________, ________ ॥

| | कस्मात् | किम् | कीदृशं भवति |
|---|---|---|---|
| उदा. | **अभ्यासात्** | **ज्ञानम्** | **श्रेयः** |
| १. | ________ | ________ | विशिष्यते |
| २. | ________ | ________ | विशिष्यते |
| ३. | ________ | ________ | विशिष्यते |

## ४. ७. पदच्छेदं कुरुत –

१. निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् (२.४५)
= ________ + ________ + ________ + ________

२. दीपो निवातस्थो न (६.१९)
= ________ + ________ + ________

३. यतो यतो निश्चरति (६.२६)
= ________ + ________ + ________

४. यो यो याम् (७.२१)

= ______________ + ______________ + ______________

५. यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः (४.२२)

= ______________ + ______________ + ______________

६. असितो देवलो व्यासः (१०.१३)

= ______________ + ______________ + ______________

७. उक्तो हृषीकेशो गुडाकेशेन (१.२४)

= ______________ + ______________ + ______________

४. ८. यथोदाहरणं प्रक्रियां लिखत -

उदा- घ्नतः + अपि = घ्नत + ः + अपि

= घ्नत + उ + अपि ( विसर्गसन्धिः, उकारः)

= घ्नतो + अपि (गुणसन्धिः)

= घ्नतोऽपि (पूर्वरूपसंन्धिः) (१.३५)

१. सामवेदः + अस्मि (१०.२२) = ______________

= ______________

= ______________

= ______________

२. क्रोधः + अभिजायते (२.६२)= ______________

= ______________

= ______________

= ______________

३. शक्यः + अवाप्तुम् (६.३६) = ______________

= ______________

= ______________

= ______________

४. स्वभावः + अध्यात्मम् (८.३) = ______________

= ______________

= ________________

= ________________

५. स्थितः + अस्मि (१८.७३) = ________________

= ________________

= ________________

= ________________

४. ९. रिक्तस्थलानि पूरयत –

१. धृतराष्ट्र उवाच (१.१) = ________ + ________

२. ________________ (२.४७) = कर्मफलहेतुः + भूः + मा

३. निराशीर्निर्ममो भूत्वा (३.३०) = ________ + ________ + ________

४. समिद्धोऽग्निर्भस्मसात् (४.३७) = ________ + ________ + ________

५. ________________ (५.२४) = सुखः + अन्तरारामः + तथा

६. तपस्विभ्योऽधिको योगी (६.४६) = ________ + ________ + ________

७. कामैस्तैस्तैर्हृतज्ञानाः (७.२०) = ________ + ________ + ________ + ________

८. ________________ (८.२४) = अग्निः + ज्योतिः + अहः

९. अनन्याश्चिन्तयन्तो माम् (९.२२) = ________ + ________ + ________

१०. ________________ (१०.१६) = याभिः + विभूतिभिः + लोकान्

११. वायुर्यमोऽग्निर्वरुणः (११.३९) = ________ + ________ + ________ + ________

१२. ________ ________ ________ (१२.२०)

= श्रद्दधानाः + मत्परमाः + भक्ताः

१३. ________________ (१३.२३) = सः + भूयः + अभिजायते

१४. अप्रकाशोऽप्रवृत्तिश्च (१४.१३) = ________ + ________ + ________

१५. ________________ (१५.१४) = वैश्वानरः + भूत्वा

१६. कामक्रोधस्तथा (१६.२१) = ________ + ________ + ________

१७. पुरुषो यो यत् (१७.३) = ________ + ________ + ________

१८. नीतिर्मतिर्मम (१८.७८) = ________ + ________ + ________

# ५. महाविद्यालये भगवद्गीता

एतेषु गीताश्लोकेषु स्थूलाक्षरैः मुद्रितानि पदानि परिशीलयत –

णत्वम्

पश्य मे पार्थ **रूपाणि** शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि **नानावर्णाकृतीनि** च ॥ (११.५)

पश्यैतां पाण्डु**पुत्राणामा**चार्य महतीं चमूम् ।
व्यूढां द्रुपद**पुत्रेण** तव **शिष्येण** धीमता ॥ (१.३)

**कर्मणो** ह्यपि बोद्धव्यं बोद्धव्यं च **विकर्मणः** ।
**अकर्मणश्च** बोद्धव्यं गहना **कर्मणो** गतिः ॥ (४.१७)

अपाने जुह्वति **प्राणं प्राणे**ऽपाने तथापरे ।
**प्राणा**पानगती रुद्ध्वा **प्राणायामपरायणाः** ॥ (४.२९)

एतेषु स्थूलाक्षरैः मुद्रितेषु शब्देषु 'ण' इति वर्णः दृश्यते ।

णकारसहितानि पदानि चित्वा रिक्तस्थाने लिखत –

| ____________ | ____________ | ____________ |
| --- | --- | --- |
| ____________ | ____________ | ____________ |
| ____________ | ____________ | ____________ |
| ____________ | ____________ | ____________ |

कुत्र अयं 'ण' कारः इति ज्ञातुम् अधुना वयं इमं पाठं पठाम ।

एतत् पत्रं सावधानं पठत –

रामनगरी
१५ जून् २००८

प्रियवत्स सुधीर !

हार्दाः शुभाशयाः ।

भवतः पत्रं प्राप्तम् । गृहात् प्रथमवारं दूरस्थे नगरे छात्रावासे वसतः भवतः कुशलं ज्ञातम् । महाविद्यालये पठने व्यग्रः सन्नपि भवान् प्रतिदिनं धावनं करोति, मित्रैः सह कण्डोलकन्दुकं (बास्केट्बाल् ) क्रीडति, **सङ्गीतप्रेमिणां** गणेऽपि भागं वहति – इत्येतत् सर्वं ज्ञात्वा अत्र सर्वे नितरां सन्तुष्टाः । भवतः विद्यालये पाठ्यमानेषु ऐच्छिकविषयेषु 'भगवद्गीता' अन्यतमः विषयः अस्ति इत्येतत् मम आनन्दं जनयति । तत्रापि भगवद्गीता संस्कृतभाषया एव पाठ्यते इति श्रुत्वा भवतः माता अभिप्रैति यत् 'एषः तु दुग्धशर्करायोगः' इति । महाविद्यालये भवता व्यक्तित्वस्य सर्वतोमुखविकासाय अवसरः प्राप्तः अस्ति इति सा मन्यते ।

सुहृदः भगवद्गीताकक्ष्याम् आगन्तुं न इच्छन्ति, तत्र पुनः केचन कक्ष्यां प्रति गन्तॄन् उपहसन्ति इत्येतत्तु यथा भवतः तथा ममापि खेदकारी विषयः । परन्तु अत्र भवतः **मित्राणां** न दोषः । यतः ते न जानन्ति यत् मानवताविकासे

विश्वाभ्युदये च गीता कथम् उपकरोति । 'गीता तु अतीव प्राचीनः ग्रन्थः । तस्य पठनेन अद्य को वा लाभः, विशिष्य यूनाम् ?' इत्येवं बहवः प्रश्नाः स्युः तेषाम् ।

उपनिषदः, भगवद्गीता, ब्रह्मसूत्रं च प्रस्थानत्रयम् इति कथ्यते । एते ग्रन्थाः भारतीयतत्त्वज्ञानस्य आधारभूताः सम्मान्याश्च । उपनिषदः यान् विषयान् प्रतिपादयन्ति ते विषयाः एव ब्रह्मसूत्रेषु **सूत्ररूपेण** उक्ताः सन्ति । भगवद्गीता उपनिषदां सारः इति कथ्यते । वेदेषु कर्मकाण्डः ज्ञानकाण्डः च इति भागद्वयं वर्तते । ज्ञानकाण्डस्य अन्यत् नाम एव वेदान्तः अथवा उपनिषद् ।

'उपनिषद्' इति शब्दस्य **श्रवणमात्रेण** एव पवित्रा सरस्वतीनदी गङ्गानदी च, उत्तुङ्गानि **हिमशिखराणि**, साधुस्वभावाः तपस्विनः, वनभूमिषु प्रतिष्ठिताः ऋष्याश्रमाः, **पक्षिणां** कलरवः, वृक्षच्छाया, **पुष्पाणां** सुगन्धः, अध्यापनपराः ऋषयः, अध्ययनशीलाः शिष्याः चेति बहुविधं चित्रं बुद्धिपथम् आयाति । अतः एव तत्त्वज्ञानम् इत्युक्ते शान्ते परिसरे वासः, व्यवहारप्रपञ्चात् दूरं धावनम्, कुटुम्बस्य परित्यागः, स्वकर्तव्यस्य च त्यागः इति चिन्तनं सुशिक्षितानाम् अपि भवति, किं पुनः साधारणानाम् ? पाण्डुपुत्रः अर्जुनः अपि तथैव चिन्तितवान् । अतः एव रणाङ्गणे 'अहं युद्धं न करोमि । राज्यं न इच्छामि । सुखं न इच्छामि । तस्मात् संन्यासः एव वरम्' इति उक्तवान् । एतत् तु अत्यन्तं विपरीतचिन्तनम् । एषा **तत्त्वज्ञानविषयिणी** महती भ्रान्तिः । तां समूलम् उत्पाटयति वेदस्वरूपः भगवान् **श्रीकृष्णः** गीताद्वारा । महाभारतयुद्धभूमौ सः स्वयम् अर्जुनं तत्त्वं बोधयति । जीवनं केन **प्रकारेण करणीयम्**, केन हेतुना कर्म **आचरणीयम्** इति च उपदिशति ।

त्वम् एतौ गीताश्लोकौ स्मरसि खलु ?

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥२.३॥**
**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥२.३७॥**

"जगति यां काञ्चित् वृत्तिम् अवलम्बमानाः अपि भगवद्गीतातः **प्रेरणां** प्राप्तुम् अर्हन्ति । भगवतः अंशोऽस्मीति यदि धीवरः अवगच्छति, तर्हि सः धीवरेषु एव श्रेष्ठः भवति । विद्यार्थी अपि विद्यार्थिषु एव श्रेष्ठः भवति । तथैव कश्चित् अधिवक्ता अपि" इति सन्दिष्टवान् स्वामी विवेकानन्दः ।

**मित्राणां सन्देहनिवारणे** एते विषयाः भवतः साहाय्यं कुर्युः इति आशासे । भवता कदा दूरभाषा प्राप्येत, कदा भवतः ध्वनिः श्रूयेत इति वयं **प्रतीक्षमाणाः** स्मः । दूरभाषा प्राप्यते चेदपि पत्रलेखनं मा परित्यजतु । भवतः माता भवता लिखितानि **पत्राणि** पुनःपुनः पठन्ती भवति ।

शुभाशिषः ।
भवदीयः तातः

**गीताश्लोकयोः अन्वयः -**

पार्थ, क्लैब्यं मा स्म गमः (भीरुत्वं मा प्राप्नुहि)। एतत् त्वयि न उपपद्यते (युज्यते)। परन्तप, क्षुद्रं हृदयदौर्बल्यं त्यक्त्वा उत्तिष्ठ ॥२.३॥

कौन्तेय, युद्धे हतः वा स्वर्गं प्राप्स्यसि, जित्वा वा महीं भोक्ष्यसे। तस्मात् युद्धाय कृतनिश्चयः उत्तिष्ठ ॥२.३७॥

## अभ्यासः

५. १. पूर्णेन वाक्येन उत्तरयत -

१. सुधीरः कुत्र वसति ?

________________________________________ ।

२. सुहृदः किमर्थं भगवद्गीताकक्ष्याम् आगन्तुं न इच्छन्ति ?

________________________________________ ।

३. भारतीयतत्त्वज्ञानस्य आधारत्रयं किम् ?

________________________________________ ।

४. भगवान् श्रीकृष्णः गीताद्वारा किम् उपदिशति ?

________________________________________ ।

५. स्वामी विवेकानन्दः गीताविषये किं वदति ?

________________________________________ ।

५. २. पूर्वतने पत्रे स्थूलाक्षरैः लिखितानि पदानि चित्वा रिक्तस्थाने लिखत -

| | | |
|---|---|---|
| ________ | ________ | ________ |
| ________ | ________ | ________ |
| ________ | ________ | ________ |
| ________ | ________ | ________ |
| ________ | ________ | ________ |

पाठे स्थूलाक्षरैः मुद्रितेषु पदेषु 'णकारः' वर्तते। परन्तु अन्येषु केषुचित् पदेषु 'नकारः' वर्तते।
यथा - उत्तुङ्गा<u>नि</u>, लिखिता<u>नि</u>, ।

### विचारयत -

पठनम्, लेखनम्, अर्चनम् - एतेषु पदेषु नकारः वर्तते।
पर्णम्, निर्णयः, अर्णवः - एतेषु पदेषु णकारः वर्तते। किं भवन्तः निर्णयं कर्तुं शक्नुवन्ति यत् एतेषु पदेषु णकारे कारणं किमिति ?
साधु ज्ञातं भवद्भिः - णकारात् पूर्वं <u>रकारः</u> वर्तते। पर्णम् = प <u>र्</u> णम् / नि <u>र्</u> णयः / अ <u>र्</u> णवः

एतान्यपि पदानि परिशीलयत –

शयनम् , अशनम् , पालनम् – एतेषु पदेषु नकारः वर्तते।

उष्णम् , कृष्णः, विष्णुः– एतेषु पदेषु णकारः वर्तते। एतेषु पदेषु णकारे कारणं किम् ?

साधु एव ज्ञातं भवद्भिः – णकारात् पूर्वं षकारः वर्तते। उ ष् णम् / कृष्णः / विष्णुः

इमान्यपि पदानि परिशीलयत –

तिसृणाम्, भ्रातॄणाम्, पितॄणाम् – एतेषु पदेषु णकारे कारणं किम् ?

साधु साधु, सम्यगेव ज्ञातं भवद्भिः – णकारात् पूर्वं ऋकारः वर्तते।

एतेन अस्माभिः निश्चीयते यत् नकारात् पूर्वं रकारः, षकारः, ऋकारः वा यदि वर्तते तर्हि नकारस्य णकारः भवति।

रकारः, षकारः, ऋकारः च णकारस्य निमित्तम् इति उच्यते। अत्रेदं महर्षेः पाणिनेः वचनं ज्ञातव्यम्।

१. *रषाभ्यां नो णः समानपदे। पा.सू. ८.४.१*

१. समानपदे (अखण्डपदे) रकारः(रेफः), षकारः वा नकारात् पूर्वं वर्तते चेत् नकारस्य णकारः(णत्वं) भवति। ऋकारः रेफांशयुक्तः। अतः सोऽपि णकारस्य निमित्तं भवति।

एवम् ऋकारः, रकारः, षकारः च णत्वस्य निमित्तम् इति सिद्धं भवति।

५. ३. यथोदाहरणम् एतेषां पदानां वर्णान् पृथक् प्रदर्श्य णकारस्य निमित्तं लिखत –

यथा – **पूर्णः** = **प् + ऊ + र् + न् + अः ( नकारात् पूर्वं रकारः )**

= **प् + ऊ + र् + ण् + अः (न = ण)**

१. पितॄणाम् = ________________ (नकारात् पूर्वम् ______)

= ________________ (______ = ______)

२. उत्तीर्णः = ________________ ( नकारात् पूर्वं ______)

= ________________ (______ = ______)

३. मुष्णाति = ________________ ( नकारात् पूर्वं ______)

= ________________ (______ = ______)

४. चतसृणाम् = ________________ ( नकारात् पूर्वं ______)

= ________________ (______ = ______)

५. विष्णुः = ________________ ( नकारात् पूर्वं ______)

= ________________ (______ = ______)

इमानि तावत् पदानि परिशीलयत –

करणम्, पोषणम्, रामेण, बृंहणम्

करणम् – अत्र रकारणकारयोः मध्ये अकारः वर्तते।

पोषणम् – अत्रापि षकारणकारयोः मध्ये अकारः वर्तते ।

रामेण – र् + आ + म् + ए + ण् + अ – अत्र रकारणकारयोः मध्ये 'आ', 'म्', 'ए' इति वर्णाः वर्तन्ते ।

बृंहणम् – ब् + ऋ + ं + ह् + अ + ण् + अम् – अत्र ऋकारणकारयोः मध्ये 'ं', 'ह्', 'अ' इति वर्णाः वर्तन्ते ।

निमित्तणकारयोः मध्ये के वर्णाः भवितुम् अर्हन्ति ?

अत्रेदं पाणिनेः सूत्रम् – *२. अट्कुप्वाङ्नुम्व्यवायेऽपि । पा.सू. ८.४.२*

अट्, कवर्गः, पवर्गः, आङ्, अनुस्वारः – एते भवितुम् अर्हन्ति इत्यर्थः ।

२. समानपदे ऋकारनकारयोः, रकारनकारयोः षकारनकारयोः वा मध्ये यदि अट्–कुः–पुः–आङ्–नुम् – इत्येते वर्णाः भवन्ति तर्हि अपि नकारस्य णकारः भवति ।

जानीत –

अट् वर्णाः – स्वराः (अचः) + ह्, य्, व्, र् (ट्)
कुः – कवर्गः – क् ख् ग् घ् ङ्
पुः – पवर्गः – प् फ् ब् भ् म्
आङ् – 'आ' रूपः उपसर्गः
नुम् – अनुस्वारः

अखण्डपदे ऋकारनकारयोः, रकारनकारयोः, षकारनकारयोः वा मध्ये भवन्ति । यथा –

अट्वर्णाः

१. भाषणम् – भ् + आ + ष् + **अ** + न् + अ + म् (षकारनकारयोः मध्ये अकारः वर्तते । नकारस्य णकारः भवति । )

२. गर्वेण – ग् + अ + र् + **व्** + **ए** + न् + अ (रकारनकारयोः मध्ये वकारः एकारः च वर्तते । नकारस्य णकारः भवति ।)

कवर्गः

अर्केण – अ + र् + **क्** + ए + न् + अ (रकारनकारयोः ककारः वर्तते । नकारस्य णकारः भवति ।)

पवर्गः

रामेण – र् + आ + **म्** + ए + न् + अ (रकारनकारयोः मकारः वर्तते । नकारस्य णकारः भवति ।)

अट् पवर्गः च

ब्रह्मणः – ब् + र् + अ + **ह्** + **म्** + अ + न् + अः ( रकारनकारयोः मध्ये हकारः मकारः च वर्तते । नकारस्य णकारः भवति ।)

आङ्

पर्याणद्धम् – प + र् + य् + **आ(ङ्)** + न् + अ + द्ध + अ + म् (रकारनकारयोः मध्ये आ(ङ्) वर्तते । नकारस्य णकारः भवति ।) (पर्याणद्धम् = सम्बद्धम्)

नुम्

बृंहणम् = **ब्** + ऋ+ **नुम्** (अनुस्वारः) + ह् + अ + न् +अ + म् (ऋकारनकारयोः मध्ये नुम् वर्तते । तथापि नकारस्य णकारः भवति ।) (बृंहणम् = गजरवः)

विशेषसूचना

वर्षेण = व् + अ + र् + ष् + ए + न् +अ (षकारनकारयोः मध्ये ए वर्तते । नकारस्य णकारः भवति ।) एतस्मिन् उदाहरणे णत्वे यद्यपि रकारः षकारः च इति निमित्तद्वयम् अस्ति तथापि नकारस्य समीपः वर्णः षकारः एव निमित्तमिति अङ्गीक्रियते । तस्मात् णत्वस्य निमित्तं षकारः भवति, न तु रकारः इति स्मर्तव्यम् ।

५. ४. एतेषु पदेषु णकारस्य निमित्तं किम् , निमित्तनकारयोः मध्ये के वर्णाः सन्ति इति लिखत –

| पदम् | णत्वस्य निमित्तम् | निमित्तणकारयोः मध्ये स्थिताः वर्णाः |
|---|---|---|
| यथा – रामाणाम् | रकारः | अट् , पवर्गः |
| १. कृष्णः (१.२८) | ______ | ______ |
| २. रूपेण (११.४६) | ______ | ______ |
| ३. कर्मणा (१८.६०) | ______ | ______ |
| ४. पुराणी (१५.४) | ______ | ______ |
| ५. शृण्वन् (५.८) | ______ | ______ |
| ६. प्रणिपातेन (४.३४) | ______ | ______ |
| ७. गृह्णाति (२.२२) | ______ | ______ |
| ८. शरीराणि (२.२२) | ______ | ______ |
| ९. जीर्णानि (२.२२) | ______ | ______ |
| १०. इन्द्रियाणि (३.७) | ______ | ______ |

जानीत –

अखण्डपदे (समानपदे) यदि ऋकारनकारयोः, रकारनकारयोः, षकारनकारयोः वा मध्ये अट्–कुः–पुः–आङ्–नुम् (अडादयः) इत्येतान् विना अन्ये वर्णाः भवन्ति तर्हि नकारस्य णकारः न भवति ।

यथा – कर्मठेन = क् + अ + र् + म् + अ + ठ् + ए + न् + अ (रकारनकारयोः मध्ये ठकारःअस्ति । अत्र ठकारः अडादिभिन्नः वर्णः । अतः नकारस्य णकारः न भवति ।)

५. ५. एतेषु पदेषु णकारे निमित्तं किम्, निमित्तनकारयोः च मध्ये कः अडादिभिन्नः वर्णः इति लिखत –

| | पदम् | णत्वस्य निमित्तम् | अडादिभिन्नः वर्णः |
|---|---|---|---|
| यथा – | ज्येष्ठेन | षकारः | ठकारः |
| | १. रश्मिना | ______ | ______ |
| | २. रत्नम् | ______ | ______ |
| | ३. मारीचेन | ______ | ______ |
| | ४. अर्चनम् | ______ | ______ |
| | ५. कृष्णेन | ______ | ______ |
| | ६. रटनम् | ______ | ______ |
| | ७. स्पर्शनम् | ______ | ______ |
| | ८. शृगालेन | ______ | ______ |
| | ९. दर्शनम् | ______ | ______ |
| | १०. स्वार्थेन | ______ | ______ |

विशेषः – पदान्ते स्थितस्य नकारस्य णकारः न भवति –

*पदान्तस्य । (पा. सू. ८.४.३७)* पदान्तस्य नस्य णत्वं न स्यात् इत्यर्थः ।

यथा – रामान् – र् + आ + म् + आ + न् (अन्ते नकारः अस्ति । णकारः न भवति ।)

एवं हरीन्, त्रीन्, स्वीकुर्वन् इत्यादिषु अपि शब्देषु इति ज्ञेयम् ।

५. ६. आदौ निर्दिष्टं पितुः पत्रं पुनरेकवारं पठत –

- पठत, चर्चां च कुरुत –

महाविद्यालये सुधीरेण व्यक्तित्वस्य सर्वतोमुखविकासाय अवसरः प्राप्तः इति माता मन्यते । सर्वतोमुखविकासः कथं भवति ?

मनुष्यस्य शरीरम् अस्ति, मनः अस्ति, बुद्धिः अस्ति, आत्मा अपि अस्ति । एतेषां सर्वेषां विकासाय यदा प्रयत्यते, तदा एव वस्तुतः मनुष्यस्य विकासः भवति ।

किं भवद्भिः स्वस्य सर्वतोमुखविकासाय प्रयत्यते ? यदि प्रयत्यते तर्हि कथम् ? नो चेत् कुतः न ?

- चर्चां कुरुत – पत्रलेखन-दूरभाषासम्भाषणयोः कतरत् वरम् ?
- चर्चां कुरुत – पितुः पत्रं पठित्वा सुधीरः किं कृतवान् स्यात् ?

५. ७. केषाञ्चित् छात्राणां चिन्तनम् अधः कैश्चित् वाक्यैः लिखितम् अस्ति । तत् पठत । तत्र कुत्रचित् णत्वप्रयोगे दोषाः सन्ति । यदि वाक्ये दोषाः सन्ति तर्हि शब्दान् परिष्कृत्य लिखत –

यथा – **सुधीरः पितुः पत्रं पठितवाण् ।** **पठितवान् ।**

१. तत्रत्यान् विषयाण् ज्ञातवान् । ________________।

२. मित्रैः सह चर्चां कृतवान् । ________________।

३. सर्वानि मित्रानि गीताकक्ष्याम् अगच्छन् । ________________।

४. गीताकक्ष्यायाः द्वौ कालांशौ आस्ताम् । ________________।

५. प्रथमकालांशे संस्कृतस्य शिक्षनं द्वितीये तु गीतायाः पाठनं च । ________________।

६. प्रथमकालांशस्य आरम्भः संस्कृतगीतेन अभवत् । ________________।

७. ततः संस्कृतसम्भाषनम् अन्ववर्तत । ________________।

८. द्वितीयकालांशस्य आरम्भः ॐकारेण अभवत् । ________________।

९. ततः दशानां गीताश्लोकानां पठनम् । ________________।

१०. ततः गीताविषये प्रवचनं सम्पन्नम् । ________________।

## ज्ञानवर्धनी

गीतायाः महत्त्वम् एभिः श्लोकैः ज्ञायते –

गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ॥१॥

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥२॥

मलनिर्मोचनं पुंसां जलस्नानं दिने दिने ।
सकृद् गीतामृतस्नानं संसारमलनाशनम् ॥३॥

गीतायां गुणानां त्रिधा विभागः कृतः अस्ति -

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ १४.५ ॥**

**१. सत्त्वगुणः**

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥१४.६॥

**सात्त्विकः**

**आहाराः** आयुः-सत्त्व-बल-आरोग्य-सुखप्रीतिविवर्धनाः ।
यज्ञः अफलार्थिभिः विधिपूर्वकं क्रियते ।
**तपः** शारीरं तपः, वाङ्मयं तपः, मानसं तपः ।
दानम् देशकाल-पात्रानुसारं सुपात्राय दीयते ।
**बुद्धिः** यम-नियम-श्रद्धा-भक्तिमयी ।

**२. रजोगुणः**

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥१४.७॥

**राजसः**

**आहाराः** कटु-अम्ल-लवण-अत्युष्ण-तीक्ष्ण-रूक्ष-विदाहिनः ।
यज्ञः यत् फलमुद्दिश्य दम्भार्थं क्रियते ।
**तपः** सत्कारमानपूजार्थं दम्भेन क्रियते ।
दानम् प्रत्युपकारार्थं फलेच्छया दीयते ।
**बुद्धिः** धर्मम् अधर्मम्, कार्यम् अकार्यं सम्यक् न जानाति ।

**३. तमोगुणः**

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥१४.८॥

**तामसः**

**आहाराः** उच्छिष्टाः, पर्युषिताः, अमेध्याः, गतरसाः ।
यज्ञः मन्त्रहीनः, अन्न-दान-हीनः, अदक्षिणः ।
**तपः** परेषां विनाशाय क्रियते ।
दानम् अदेशकाले अपात्रेभ्यः दीयते ।
**बुद्धिः** प्रमाद-मूढता-आलस्य-मोह-अज्ञानमयी ।

# ६. मम माता देवता

**णिजन्तम् - १**

एतानि गीतावाक्यानि सावधानं परिशीलयत -

सेनयोरुभयोर्मध्ये रथं **स्थापय** मेऽच्युत । (१.२१)
यं हि न **व्यथयन्त्येते** पुरुषं पुरुषर्षभ ।(२.१५)
कथं स पुरुषः पार्थ कं **घातयति** हन्ति कम् ।(२.२१)
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं **क्लेदयन्त्यापो** न **शोषयति** मारुतः ॥(२.२३)
तेषाम् आदित्यवज्ज्ञानं **प्रकाशयति** तत्परम् ।(५.१६)
उद्धरेदात्मनात्मानं नात्मान**मवसादयेत्** ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ (६.५)

**स्थूलाक्षरैः लिखितानि क्रियापदानि प्रेरणार्थकानि सन्ति । तानि चित्वा रिक्तस्थलानि पूरयत -**

__________ __________ __________
__________ __________ __________
__________

अधुना वयं 'प्रेरणार्थकक्रियास्वरूप'विषयम् अवगच्छाम । इदं रूपं 'णिजन्तम्' इति कथ्यते ।

एतत् शिशुगीतं गायत -

मम माता देवता ।
मम माता देवता ।
अतिसरला, मयि मृदुला
गृहकुशला, सा अतुला ॥ मम माता ॥

**पाययति** दुग्धं, **भोजयति** भक्तं
**लालयति** नित्यं, **तोषयति** चित्तम् ॥ मम माता ॥

सायङ्काले **नीराजयति**
**पाठयति** च मां शुभं करोति ।
श्लोकः - शुभं कुरु त्वं कल्याणम् आरोग्यं धनसम्पदः ।
दुष्टबुद्धिविनाशाय दीपज्योतिर्नमोऽस्तु ते ॥
**पाठयति** च मां शुभं करोति ॥ मम माता ॥

रात्रौ अङ्के मां **स्वापयति**
मधु मधु मधुरं गीतं गायति
आ आ आ आ आऽऽ ॥ मम माता ॥

*- श्री. ल. म. चक्रदेवः*

पठत तथा अवगच्छत -

१. अश्वः **धावति** ।

२. अश्वारोही अश्वं **धावयति** ।

वाक्यद्वये अपि 'अश्वस्य धावनम्' इति समाना क्रिया । तर्हि भेदः कुत्र ?

साधु उक्तम् - प्रथमे वाक्ये अश्वः स्वयं धावति । द्वितीये वाक्ये अश्वः धावति, परन्तु अश्वारोही अश्वं धावनार्थं **प्रेरयति** ।

अन्यद् उदाहरणम् -

१. छात्रः पत्रं **लिखति** । २. अध्यापकः छात्रेण पत्रं **लेखयति** ।

वाक्यद्वये अपि 'पत्रलेखनम्' इति समाना क्रिया ।

प्रथमे वाक्ये छात्रः स्वयं पत्रं लिखति । द्वितीये वाक्ये छात्रः पत्रं लिखति, परन्तु अध्यापकः छात्रं लेखनार्थं **प्रेरयति** ।

एतयोः उदाहरणयोः धावति, लिखति इति क्रियापदे, तत्सदृशानि पठति, हसति शृणोति इत्यादीनि क्रियापदानि वा अस्माकं परिचितानि एव । 'धावयति, लेखयति' इति क्रियापदे तु ततः भिन्ने स्तः । एतादृशानि प्रेरणार्थकानि क्रियापदानि '**णिजन्तानि**'(णिच्प्रत्ययः अन्ते अस्ति इति) इति उच्यन्ते । धावति लिखति - इत्यादीनि **अणिजन्तानि** इति उच्यन्ते ।

एतानि वाक्यानि उच्चैः पठत तथा अवगच्छत -

१. सरला पाठं **पठति** । शिक्षकः सरलां पाठं **पाठयति** ।

२. छात्रः विद्यालयं **गच्छति** । पिता छात्रं विद्यालयं **गमयति** ।

३. चक्रं **परिभ्रमति** । गोपालः चक्रं **परिभ्रामयति** ।

४. चाणक्यः राजसभां **प्रविशति** । द्वारपालः चाणक्यं राजसभां **प्रवेशयति** ।

५. निर्मला संस्कृतभाषां **जानाति** । गौरी निर्मलां संस्कृतभाषां **ज्ञापयति** ।

६. नौका जले **तरति** । पुरुषः नौकां जले **तारयति** ।

७. रसिकाः **तुष्यन्ति** । नाटकं रसिकान् **तोषयति** ।

८. राष्ट्रध्वजः **स्फुरति** । राष्ट्रभक्ताः राष्ट्रध्वजं **स्फोरयन्ति** ।

९. पुत्री औषधं **पिबति** । माता पुत्रीम् औषधं **पाययति** ।

१०. जनाः **हसन्ति** । विदूषकः जनान् **हासयति** ।

११. छात्रः **बोधति** । शिक्षकः छात्रं **बोधयति** ।

१२. बालकः **जागर्ति** । पिता बालकं **जागरयति** ।

## अभ्यासः

६. १. यथोदाहरणं णिजन्तरूपाणि लिखत –

| | धातुः | अणिजन्तम् | णिजन्तम् | | धातुः | अणिजन्तम् | णिजन्तम् |
|---|---|---|---|---|---|---|---|
| यथा – | खाद् | खादति | खादयति | यथा – | लिख् | लिखति | लेखयति |
| १. | धाव् | धावति | ____________ | १४. | क्लिद् | क्लिद्यति | ____________ |
| २. | रक्ष् | रक्षति | ____________ | १५. | लिप् | लिम्पति | ____________ |
| ३. | क्रीड् | क्रीडति | ____________ | यथा – | बुध् | बोधति | बोधयति |
| ४. | शिक्ष् | शिक्षते | ____________ | १६. | तुष् | तुष्यति | ____________ |
| ५. | गम् | गच्छति | ____________ | १७. | शुष् | शुष्यति | ____________ |
| यथा – | हस् | हसति | हासयति | १८. | मुह् | मुह्यति | ____________ |
| ६. | दह् | दहति | ____________ | १९. | शुच् | शोचति | ____________ |
| ७. | भ्रम् | भ्रमति | ____________ | यथा – | वृध् | वर्धते | वर्धयति |
| ८. | नश् | नश्यति | ____________ | २०. | वृत् | वर्तते | ____________ |
| ९. | नद् | नदति | ____________ | २१. | दृश् | पश्यति | ____________ |
| १०. | ज्वल् | ज्वलति | ____________ | २२. | कृष् | कर्षति | ____________ |
| यथा – | स्मृ | स्मरति | स्मारयति | यथा – | गै | गायति | गापयति |
| ११. | धृ | धरति | ____________ | २३. | स्था | तिष्ठति | ____________ |
| १२. | कृ | करोति | ____________ | २४. | ज्ञा | जानाति | ____________ |
| १३. | जागृ | जागर्ति | ____________ | २५. | दा | ददाति | ____________ |

वस्तुतस्तु धातोः **णिच्प्रत्यये** कृते णिजन्तः धातुः सिद्धः भवति । ततः लकारे तिङ्प्रत्ययेषु च णिजन्तक्रियापदानि सिध्यन्ति ।

| यथा – | धातुः | णिच् | णिजन्तः धातुः | लट् तिङ्प्रत्ययः |
|---|---|---|---|---|
| | गम् | इ | गमि | गमयति |
| | पठ् | इ | पाठि | पाठयति |
| | दृश् | इ | दर्शि | दर्शयति |

**विशेषसूचना – प्रायः णिजन्ताः उभयपदिनः भवन्ति ।**

यथा – गमयति / गमयते — पाठयति / पाठयते
कारयति / कारयते — स्मारयति / स्मारयते
दर्शयति / दर्शयते — चोरयति / चोरयते

केषाञ्चन णिजन्तानाम् आत्मनेपदिरूपाणि न भवन्ति ।

यथा – धृ – धारयति　　　　　　नश् – नाशयति

कम्प् – कम्पयति　　　　　　युध् – योधयति

धारयते, नाशयते, कम्पयते, योधयते इति रूपाणि न भवन्ति ।

**परन्तु सर्वेभ्यः णिजन्तेभ्यः परस्मैपदम् अवश्यं भवति । अतः सर्वेषामपि धातूनां णिजन्तत्वेन प्रयोगे परस्मैपदयुक्तानां रूपाणाम् प्रयोगेण दोषः न भवति ।**

६. २. मञ्जूषायां लिखितानां क्रियापदानां साहाय्येन यथोदाहरणं शुद्धानि वाक्यानि रचयत –

उपवेशयति, हासयति, गापयति, श्रावयति, कारयति,
दापयति, दर्शयति, चालयति, स्मारयति, पातयति, मार्जयति

उदा – **माता कथा**　　　　**माता कथां श्रावयति ।**

१. वानरः फलम् ________________ ।

२. तातः क्रीडनकम् ________________ ।

३. कर्मकरः प्रकोष्ठः ________________ ।

४. आपणिकः स्यूतः ________________ ।

५. अग्रजा श्लोकः ________________ ।

६. गृहस्थः अतिथयः ________________ ।

७. शिक्षिका स्तोत्रम् ________________ ।

८. मातुलः भोजनम् ________________ ।

९. सारथिः रथः ________________ ।

१०. विदूषकः दर्शकाः ________________ ।

६. ३. एतत् प्रेरणादायकं सम्भाषणं पठत –

**वन्दे मातरम् !**

"तात ! भवान् गमनं निश्चितवान् एव !" – अवदत् पुत्री मैना ।

"सत्यं वत्से ! मया रहसि स्थितेन भवितव्यम् एव । देशहितं गृहं **त्याजयति** ।" – नानासाहेबः अवदत् सचिन्तम् ।

"गृहं तु **मोहयति** ....."

"नैव वत्से ! राष्ट्रहितकार्यमेव बलवत् । तत् मां कार्ये **प्रवर्तयति** । मम तु चिन्ता गृहविषये एव ........."

"अलं चिन्तया । अहं सर्वं **निर्वर्तयिष्यामि** । आप्ताः मां कार्यमार्गं **बोधयिष्यन्ति** । ज्येष्ठाः च कार्याकार्यं **ज्ञापयिष्यन्ति** ।"

"तत्सर्वं प्रवर्तते । किन्तु आङ्ग्लाः भवतीं **सन्तापयेयुः** ।"

"अस्माभिः तत्पक्षीयाः दुर्बलाः महिलाः बालाः च दीर्घकालं पोषिताः । एवं सति किं ते कृतघ्नतां **दर्शयेयुः** ?"

"शत्रुनिग्रहः तेषां मुख्यं लक्ष्यम् । अतः ते द्वित्रदिनाभ्यन्तरे सैनिकान् अत्र **प्रेषयिष्यन्ति** । मम स्थितिं यदि भवती न **ज्ञापयेत्** तर्हि ते सैनिकाः दुर्गं **पातयिष्यन्ति** । भवनानि **नाशयिष्यन्ति** । सर्वान् भवनात् **निर्गमयिष्यन्ति** । भवत्याः मुखात् बलात् रहस्यं **स्फोटयिष्यन्ति** ।"

"ते मां तथा **पीडयितुं** नार्हन्ति । मम खड्गः तान् **निवारयिष्यति** । भगवान् अस्मान् रक्षिष्यति । अतः भवान् भवतु निश्चिन्तः । निश्शङ्कं राष्ट्रकार्ये प्रवृत्तिः क्रियताम् ।"

### अवधेयम्

यथा अणिजन्तधातूनां लट्-लृट्-लोट्-लिङादिरूपाणि भवन्ति तथैव णिजन्तधातूनामपि लट्-लृट्-लोट्-लिङादिरूपाणि भवन्ति ।

६. ४. पाठे प्रयुक्तानि कानिचन णिजन्तरूपाणि अधस्तने कोष्ठके वर्णाक्षरैः दत्तानि सन्ति । यथोदाहरणं तेषाम् अन्यलकाररूपाणि अपि लिखत –

| | लट् | लृट् | लोट् | विधिलिङ् |
|---|---|---|---|---|
| यथा – | त्याजयति | त्याजयिष्यति | त्याजयतु | त्याजयेत् |
| | मोहयति | ________ | ________ | ________ |
| | प्रवर्तयति | ________ | ________ | ________ |
| | ________ | निर्वर्तयिष्यामि | ________ | ________ |
| | ________ | बोधयिष्यन्ति | ________ | ________ |
| | ________ | ________ | ________ | सन्तापयेयुः |
| | ________ | ________ | ________ | ज्ञापयेत् |
| | ________ | नाशयिष्यन्ति | ________ | ________ |
| | ________ | ________ | ________ | दर्शयेयुः |

### अवधेयम्

*यथा अणिजन्तधातूनां तुमुन्-क्त्वा-ल्यप्-क्तवतु-आदिप्रत्ययान्तरूपाणि भवन्ति तथैव णिजन्तधातूनाम् अपि भवन्ति ।*

यथा –

| धातुः | तुमुन् अणिजन्ते | तुमुन् णिजन्ते | क्त्वा अणिजन्ते | क्त्वा णिजन्ते | ल्यप् अणिजन्ते | ल्यप् णिजन्ते | क्तवतु अणिजन्ते | क्तवतु णिजन्ते |
|---|---|---|---|---|---|---|---|---|
| गम् | गन्तुम् | गमयितुम् | गत्वा | गमयित्वा | निर्गम्य | निर्गमय्य | गतवान् | गमितवान् |
| रक्ष् | रक्षितुम् | रक्षयितुम् | रक्षित्वा | रक्षयित्वा | संरक्ष्य | संरक्ष्य | रक्षितवान् | रक्षितवान् |
| नश् | नंष्टुम् | नाशयितुम् | नष्ट्वा | नाशयित्वा | विनश्य | विनाश्य | नष्टवान् | नाशितवान् |
| स्मृ | स्मर्तुम् | स्मारयितुम् | स्मृत्वा | स्मारयित्वा | संस्मृत्य | संस्मार्य | स्मृतवान् | स्मारितवान् |
| दृश् | द्रष्टुम् | दर्शयितुम् | दृष्ट्वा | दर्शयित्वा | प्रदर्श्य | प्रदर्श्य | दृष्टवान् | दर्शितवान् |
| कृ | कर्तुम् | कारयितुम् | कृत्वा | कारयित्वा | स्वीकृत्य | स्वीकार्य | कृतवान् | कारितवान् |
| हन् | हन्तुम् | घातयितुम् | हत्वा | घातयित्वा | निहत्य | निर्घात्य | हतवान् | घातितवान् |
| मुह् | मोग्धुम् | मोहयितुम् | मुग्ध्वा | मोहयित्वा | सम्मुह्य | सम्मोह्य | मुग्धवान् | मोहितवान् |
| शुच् | शोचितुम् | शोचयितुम् | शुचित्वा | शोचयित्वा | संशोच्य | संशोच्य | शुचितवान् | शोचितवान् |
| भू | भवितुम् | भावयितुम् | भूत्वा | भावयित्वा | परिभूय | परिभाव्य | भूतवान् | भावितवान् |

६. ५. यथोदाहरणं 'पठ्' धातोः णिजन्तरूपम् उपयुज्य वाक्यानि लिखत –

यथा – पाठयिष्यति (लृट्लकारः) **अग्रजः मां संस्कृतं पाठयिष्यति ।**

१. पाठितवान् (क्तवतु) ____________________ ।

२. पाठितवती (क्तवतु) ____________________ ।

३. पाठयतु (लोट्लकारः) ____________________ ।

४. अपाठयत् (लङ्लकारः) ____________________ ।

५. पाठयेत् (विधिलिङ्) ____________________ ।

६. पाठयित्वा (क्त्वा) ____________________ ।

७. प्रपाठ्य (ल्यप् ) ____________________ ।

८. पाठयितुम् (तुमुन्) ____________________ ।

९. पाठयन् (शतृ – पुं.) ____________________ ।

१०. पाठयन्ती (शतृ – स्त्री.) ____________________ ।

६. ६. णिजन्तानि रूपाणि पठत । यथोदाहरणं वाक्यानि रचयत –

उदा – चलितुम् चालयितुम् **अहं द्विचक्रिकां चालयितुं शक्नोमि ।**

१. लिखति लेखयति ________________ ।

२. बिभेति भाययति ________________ ।

३. अतरन् अतारयन् ________________ ।

४. प्रविष्टवत्यः प्रवेशितवत्यः ________________ ।

५. कृत्वा कारयित्वा ________________ ।

६. हसितवन्तः हासितवन्तः ________________ ।

६. ७. यथोदाहरणं णिजन्तप्रयोगं कृत्वा द्वितीयं वाक्यं पूरयत –

यथा – शिष्याः पठन्ति । **अहं शिष्यान् पाठयामि ।**

१. वृक्षात् फलं पतति । सः वृक्षात् फलं ________ ।

२. उमेशः पुस्तकं ददाति । पिता पुस्तकं ________ ।

३. राकेशः कार्यं करोति । पिता राकेशेन कार्यं ________ ।

४. सेवकः वस्तूनि आनयति । स्वामी सेवकेन वस्तूनि ________ ।

५. अश्वौ रथं वहतः । सारथिः अश्वौ रथं ________ ।

६. गणेशः महाभारतम् अलिखत् । व्यासः गणेशेन महाभारतम् ________ ।

७. जनाः तरितुम् उद्युक्ताः । नाविकः जनान् ________ उद्युक्तः ।

८. पत्रं तत्रैव तिष्ठति । अनुजः पत्रं तत्रैव ________ ।

९. अहं शालां प्राप्नोमि । माता मां शालां ________ ।

१०. सेविका कार्यं करोति । गृहस्वामिनी सेविकया कार्यं ________ ।

६. ८. अधः दत्तान् श्लोकांशान् पठत, तत्र स्थितैः णिजन्तरूपैः च रिक्तस्थलानि पूरयत –

यथा – सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत । (१-२१) – अच्युत, सेनयोरुभयोर्मध्ये मे रथं **स्थापय** ।

१. न चैनं क्लेदयन्त्यापः । (२-२३) – आपः एनं न ________ ।

२. न (चैनं) शोषयति मारुतः। (२-२३) – मारुतः एनं न ________ ।

३. तत्किं कर्मणि घोरे मां नियोजयसि केशव (३-१) – केशव, तत्किं घोरे कर्मणि मां ________ ।

४. व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे । (३-२) – व्यामिश्रेण इव वाक्येन मे बुद्धिं ________ इव ।

५. एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः । (३-१६) – यः एवं प्रवर्तितं चक्रं इह न ________ ।

६. न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।(३-२६) - अज्ञानां कर्मसङ्गिनां बुद्धिभेदं न ——————— ।

७. जोषयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन् ।(३-२६)- विद्वान् युक्तः समाचरन् सर्वकर्माणि ——————— ।

८. तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ।(३-२९) - तान् अकृत्स्नविदः मन्दान् कृत्स्नवित् न ——————— ।

९. तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् । (५-१६) - तेषाम् आदित्यवत् ज्ञानं तत्परम् ——————— ।

१०. उद्धरेदात्मनात्मानं नात्मानमवसादयेत् । (६-५) - आत्मना आत्मानम् उद्धरेत्, आत्मानं न ——————— ।

६. ९. एतस्य पाठस्य आदौ दत्तं 'मम माता देवता' इति गीतं पुनः पठत -
माता किं किं करोति इति उचितैः क्रियापदैः रिक्तस्थलानि पूरयत -

| | |
|---|---|
| दुग्धं ——————— । | भक्तं (अन्नं) ——————— । |
| नित्यं ——————— । | चित्तम् ——————— । |
| सायङ्काले ——————— । | श्लोकं ——————— । |
| रात्रौ ——————— । | मधु मधु मधुरं गीतं ——————— । |

एतं विषयं पठत तथा चिन्तयत -

### गीतैव माता

माता सर्वदा अस्माकं सर्वस्वम्, विशिष्य शैशवे । सा हि तदा अस्मान् लालयति, पालयति, भोजयति तथा बोधयति अपि । सा एव प्रथमः गुरुः, सा एव देवता च । उपनिषदपि बोधयति - 'मातृदेवो भव' इति । यदा जनाः प्रौढाः सुसंस्कृताश्च भवन्ति तदा तेषु केषाञ्चित् चिन्तनम् उन्नतं भवति यथा 'वन्दे मातरम्' इत्यस्मिन् पाठे स्वातन्त्र्यसंग्रामयोधस्य नानासाहेबस्य तत्पुत्र्याः मैनायाः च । देशभक्तानां तादृशानां वीराणां चिन्तनं राष्ट्रहितस्य एव, राष्ट्रम् एव तेषां माता । तेषां मन्त्रः भवति - 'राष्ट्रदेवो भव' इति । अस्मासु अपि केचन महात्मानः सन्ति । तेषां चिन्तनं ततोऽपि उन्नतम् । ते समग्रस्य विश्वस्य हितं चिन्तयन्ति । 'सर्वे भद्राणि पश्यन्तु, मा कश्चित् दुःखभाग् भवेत्' इति भवति तेषाम् आशयः । तेषां तु 'वसुधैव कुटुम्बकम् ।'

महात्मा गान्धिः भगवद्गीतां न केवलं स्वस्य माता इति, अपि तु जगतः माता इति मन्यते स्म । भगवद्गीताविषये तदीयाः विचाराः अधः उद्धृताः सन्ति । तान् पठत -

भगवद्गीता विश्वस्य माता अस्ति । यदि कोऽपि तां श्रद्धया उपैति तर्हि सा तं नूनम् अनुगृह्णाति । तां शरणं गतः कोऽपि जनः 'वैफल्यम्' इति शब्दं न जानाति एव । सः अनिर्वचनीयम् आनन्दं परमां च शान्तिं प्राप्नोति । परन्तु इयं शक्तिः कदापि अश्रद्दधानस्य अहङ्कारयुक्तस्य पण्डितम्मन्यस्य वा जनस्य न भवति । तादृशीं शक्तिं सः एव साधयति यः अचलया श्रद्धया एकाग्रचित्ततया च एताम् उपसेवते । तस्य कदापि दुःखं न भवति ।

वैफल्यं यदा मां सर्वतः आवृणोति, एकोऽपि प्रकाशकिरणः न दृश्यते, तदा अहं गीतामातरम् उपगत्य आश्वस्तः भवामि । तदा कुतश्चित् एकः वा श्लोकः नयनपथम् आगत्य समस्यागर्तपतितम् आकुलं च मां विकासयति । जीविते बाह्यसमस्याभिः परिक्लान्ते सत्यपि मयि एकोऽपि व्रणः न दृश्यते यत् तत्र कारणं भगवद्गीतैव ।

वयम् अपि भगवद्गीतामातरम् उपासामहै ।

# ७. गुरोः स्थानम्

एतां कथां पठत –

णिजन्तम् – २

सौपर्णिकानदीतीरे किञ्चन प्राचीनं गुरुकुलमासीत् । तत्र कश्चन वयसा ज्ञानेन च वृद्धः गुरुः छात्रान् शास्त्राणि **अध्यापयति** स्म । शास्त्रज्ञानेन सह लौकिकज्ञानमपि भवतु इति धिया सः छात्रान् नानाप्रदेशान् **सञ्चारयति** स्म । तान् कन्दमूलकाष्ठादीनां संग्रहणाय वनं **गमयति** स्म । प्रतिदिनं गुरुकुले शताधिकच्छात्रान् **भोजयति** स्म ।

सः गुरुः कदाचित् तीव्रेण अनारोग्येण सम्पीडितः अभूत् । गुरुः अचिरादेव मरिष्यति इति छात्राः अवागच्छन् । यदि गुरुः कीर्तिशेषः भविष्यति तर्हि अस्मान् को वा त्रायते ? इति विचिन्त्य दुःखितमनसः ते गुरुम् उपसृत्य इत्थम् अवदन् – "गुरो ! भवतः अभावे अस्मान् को वा उद्धरति ? को वा शास्त्राणि उपदिशति ?" इति ।

गुरुः मन्दम् उत्थाय एकेन हस्तेन कमण्डलुम् अपरेण च दण्डं गृहीत्वा नद्यभिमुखम् अचलत् । शिष्याः तम् अन्वसरन् । सर्वे नदीतीरं प्राप्नुवन् । तत्र उपविष्टः गुरुः कञ्चन शिष्यम् आहूय कमण्डलुं च प्रदाय "नदीजलम् आनय" इत्यादिशत् । शिष्यः आज्ञानुगुणं कमण्डलुं जलेन पूरयित्वा प्रत्यर्पितवान् ।

गृहीतकमण्डलुः गुरुः शिष्यान् क्रमेण आगन्तुम् असूचयत् । ततः उपविष्टान् छात्रान् कमण्डलौ विद्यमानं जलं किञ्चित् किञ्चित् **अपाययत्** । तज्जलं छात्राः पवित्रं तीर्थमिति मत्वा अपिबन् । यदा सर्वेऽपि शिष्याः जलम् अपिबन् तदा कमण्डलुः रिक्तः अभूत् । तदा गुरुः अपरं शिष्यं समाह्वयत् । तेन पुनरपि जलम् **आनाययत्** । सर्वेभ्यः पुनरपि जलं वितीर्णवान् च ।

अधुनापि शिष्याः यथापूर्वं जलम् अपिबन् । जलं वितीर्य समन्दहासं गुरुः अवदत् – "सम्प्रति गुरोः स्थानं किमिति ज्ञातं खलु ? अग्रे भवद्भिः किं कर्तव्यमिति अवगतं खलु ?" इति ।

गुरोः वचनं शिष्याणां विचित्रम् इव अभासत । "नैव" इति ते शिरः अकम्पयन् ।

तदा गुरुः प्रहसन् अवदत् – "अयि प्रियशिष्याः ! मया एतावन्ति दिनानि तदेव कार्यं कृतं यदद्य कृतं वर्तते । ज्ञाननदी भवतां पुरतः प्रवहन्ती अस्ति । अहम् इमं लघुकमण्डलुं ज्ञाननदीजलेन पूरयित्वा भवतः सर्वान् **पाययामि** स्म । भवन्तः श्रद्धया तत् पिबन्ति स्म । इतः परं नाहमस्मिन् लोके भविष्यामि । 'अस्मान् को वा परित्रायेत ?' इति भवन्तः अधुना पृच्छन्तः सन्ति । न कापि चिन्ता करणीया । यतः भवतां पुरतः एव ज्ञाननदी प्रवहन्ती वर्तते । अहं न भविष्यामि, नापि मे कमण्डलुः भविष्यति । तथापि भवन्तः स्वयमेव साक्षात् ज्ञाननदीतः यथेच्छं जलं स्वीकर्तुं क्षमन्ते । अतः वृथा दुःखेन कालहरणं मा कुर्वन्तु । ज्ञानर्जने च प्रवृत्ताः भवन्तु । श्रेयोऽस्तु" इति ।

गुरोः वचनेन शिष्याः प्रमुदिताः अभवन् ।

७. १. एतेषां प्रश्नानाम् उत्तरं लिखत –

१. गुरुकुलं कुत्र आसीत् ।

________________________________ ।

२. गुरुः छात्रान् कानि अध्यापयति स्म ।

________________________________ ।

३. रुग्णं गुरुं दृष्ट्वा छात्राः किमिति अवागच्छन् ?

________________________________ ।

४. गुरुः उत्थाय कुत्र अचलत् ?

________________________________ ।

५. शिष्यः कमण्डलुं किं कृत्वा प्रत्यर्पितवान् ?

________________________________ ।

६. छात्राः किमिति मत्वा जलम् अपिबन् ?

________________________________ ।

७. शिष्याः केन प्रमुदिताः अभवन् ?

________________________________ ।

७. २. एतेषाम् अर्थेन विरुद्धाः शब्दाः पाठे प्रयुक्ताः सन्ति। तान् अन्विष्य तैः रिक्तस्थानं पूरयत –

१. नूतनम् ______________ ।  २. चिरात् ______________ ।

३. पूर्णः ______________ ।  ४. संगृह्य ______________ ।

५. प्ररुदन् ______________ ।  ६. खिन्नाः ______________ ।

७. ३. यथोदाहरणं णिजन्तवाक्यानुगुणम् अणिजन्तवाक्यानि लिखत –

| | |
|---|---|
| उदा.– **गुरुः अध्यापयति ।** | **छात्राः अधीयते ।** |
| १. गुरुः संचारयति । | छात्राः ______________ । |
| २. गुरुः गमयति । | ______________ । |
| ३. गुरुः अपाययत् । | ______________ । |
| ४. गुरुः आनाययत् । | छात्रः ______________ । |
| ५. गुरुः पाययति । | ______________ । |

एतानि वाक्यानि सावधानं परिशीलयत –

| | |
|---|---|
| रमा **उमां** मन्दिरं गमयति । | सत्यभामा **उमया** तण्डुलं पाचयति । |
| अभियन्ता **कर्मकरं** गृहं प्रेषयति । | अधिकारी **कर्मकरेण** कार्यं साधयति । |
| कुमारः **युवकं** विषयं ज्ञापयति । | वृद्धः **युवकेन** फलम् अवचाययति । |
| पाचकः **पुत्रम्** ओदनं भोजयति । | रजकः **पुत्रेण** वस्त्रं प्रक्षालयति । |
| प्रसादः **दिनकरं** श्लोकं पाठयति । | शिवः **दिनकरेण** वस्तूनि संग्राहयति । |
| राजेशः **दिनेशं** गीतं बोधयति । | गौरीशः **दिनेशेन** चाकलेहं खादयति । |
| कृषिकः **पुरुषम्** आम्रफलम् आशयति । | पुरुषः **तक्षकेण** विग्रहं निर्मापयति । |
| पण्डितः **अर्चकान्** मन्त्रान् वेदयति । | सोमयाजी **अर्चकैः** पूजां कारयति । |
| श्यामला **विमलां** पद्यम् अवगमयति । | आरक्षकः **विमलया** विषयं स्मारयति । |
| सिंहः स्वशिशुं **शृगालं** भक्षयति । | गणेशः **शृगालेन** नाट्यं कारयति । |

एतेषु वाक्येषु सर्वे णिजन्ताः धातवः प्रयुक्ताः सन्ति। ते च सकर्मकाः सन्ति। प्रत्येकं वाक्ये कर्तृपदद्वयं दृश्यते, एकः प्रयोज्यकर्ता, अन्यः प्रयोजककर्ता च इति। यः प्रेरयति सः प्रयोजककर्ता। यः प्रेरितः भवति सः प्रयोज्यकर्ता।

यथा –

बालः शालां गच्छति।  भ्राता बालकं शालां गमयति।

अत्र वाक्ये भ्राता प्रयोजककर्ता, बालकः प्रयोज्यकर्ता।

उपरि प्रदर्शितेषु वाक्येषु स्थूलाक्षरैः लिखिताः सर्वेऽपि प्रयोज्यकर्तारः। परं तेषां केषुचित् द्वितीयाविभक्तिः, पुनः केषुचित् तृतीयाविभक्तिः दृश्यते। कुत्र द्वितीयाविभक्तिः, कुत्र च तृतीयाविभक्तिः इति कथं ज्ञातव्यम्?

एतानि वाक्यानि परिशीलयत –

| **अणिजन्तवाक्यम्** | **णिजन्तवाक्यम्** |
|---|---|
| पुत्रः शालां प्राप्नोति । | पिता पुत्रं शालां प्रापयति । |
| भृत्यः स्यूतं प्रेषयति । | स्वामी भृत्यं स्यूतं प्रेषयति । |
| कोकिलः नीडं गच्छति । | काकः कोकिलं नीडं गमयति । |
| यात्री तीर्थक्षेत्रम् अटति । | मार्गदर्शी यात्रिणं तीर्थक्षेत्रम् आटयति । |

एतेषु वाक्येषु सर्वेऽपि धातवः गत्यर्थकाः सन्ति । तेषां प्रयोगे अणिजन्तवाक्येषु प्रयोज्यकर्तुः प्रथमाविभक्तिः भवति । णिजन्तवाक्येषु ततो द्वितीयाविभक्तिः भवति ।

जानीत–

**यत्र वाक्येषु गत्यर्थकधातूनां णिजन्तत्वेन प्रयोगः भवति तत्र प्रयोज्यकर्तुः द्वितीयाविभक्तिः भवति ।**

७. ४. आवरणे स्थितस्य शब्दस्य द्वितीयाविभक्त्यन्तरूपेण रिक्तस्थानं पूरयत –

१. रामः ———— गुरुकुलं गमयति । (बालकः)

२. गोपालकः ———— गोष्ठं प्रापयति । (वत्सः)

३. देवदत्तः ———— कोशागारं सञ्चारयति । (मित्रम्)

४. वणिक् ———— उद्योगं प्रापयति । (कर्मकरः)

विशेषः –

नीञ्धातुः (नयति) वह्धातुः (वहति) च यद्यपि गत्यर्थकौ तथापि तयोः णिजन्तत्वेन प्रयोगे प्रयोज्यकर्तुः द्वितीयाविभक्तिः न भवति, अपि तु तृतीयाविभक्तिः ।

यथा –

| | |
|---|---|
| गोविन्दः पुस्तकं नयति । | मनोजः **गोविन्देन** पुस्तकं नाययति । |
| वृषभः भारं वहति । | शाकटिकः **वृषभेण** भारं वाहयति । |

एतानि वाक्यानि परिशीलयत –

| **अणिजन्तवाक्यम्** | **णिजन्तवाक्यम्** |
|---|---|
| बलदेवः कथां जानाति । | वसुदेवः बलदेवं कथां ज्ञापयति । |
| शिष्यः श्लोकार्थं बोधति । | उपाध्यायः शिष्यं श्लोकार्थं बोधयति । |
| गोपालः मन्त्रार्थं वेत्ति । | नन्दनः गोपालं मन्त्रार्थं वेदयति । |
| सीतारामः काव्यमहत्त्वं बोधति । | जयरामः सीतारामं काव्यमहत्त्वं बोधयति । |

एतेषु वाक्येषु सर्वे धातवः बुद्ध्यर्थकाः (ज्ञानार्थकाः) सन्ति । तेषां प्रयोगे अणिजन्तवाक्येषु प्रयोज्यकर्तुः प्रथमाविभक्तिः भवति । णिजन्तवाक्येषु पुनः द्वितीयाविभक्तिः ।

जानीत –

**येषु वाक्येषु बुद्ध्यर्थकधातूनां णिजन्तत्वेन प्रयोगः तत्र प्रयोज्यकर्तुः द्वितीयाविभक्तिः भवति ।**

७. ५. आवरणे स्थितस्य शब्दस्य उचितविभक्त्यन्तरूपेण रिक्तस्थानं पूरयत –

१. शङ्करः ____________ विषयं ज्ञापयति । (रविः)
२. नियन्त्रकः ____________ मार्गं ज्ञापयति । (चालकः)
३. गुरुः ____________ श्लोकार्थं बोधयति । (छात्रः)
४. माता ____________ सदाचारं वेदयति । (पुत्री)

एतानि वाक्यानि परिशीलयत –

| अणिजन्तवाक्यम् | णिजन्तवाक्यम् |
|---|---|
| शिशुः शर्करां भुङ्क्ते । | माता शिशुं शर्करां भोजयति । |
| वत्सः सस्यं भक्षयति । | गोपालः वत्सं सस्यं भक्षयति । |
| पुत्रः कदलीफलम् अश्नाति । | पिता पुत्रं कदलीफलम् आशयति । |
| कुक्कुरः मूषिकं भक्षयति । | गोविन्दः कुक्कुरं मूषिकं भक्षयति । |

एषु वाक्येषु सर्वेऽपि धातवः भक्षणार्थकाः सन्ति । तेषां प्रयोगे अणिजन्तवाक्येषु प्रयोज्यकर्तुः प्रथमाविभक्तिः भवति । णिजन्तवाक्येषु पुनः द्वितीयाविभक्तिः ।

जानीत –

**येषु वाक्येषु भक्षणार्थकधातूनां णिजन्तत्वेन प्रयोगः तत्रापि प्रयोज्यकर्तुः द्वितीयाविभक्तिः भवति ।**

७. ६. आवरणे स्थितस्य शब्दस्य उचितविभक्त्यन्तरूपेण रिक्तस्थानं पूरयत –

१. भगिनी ____________ क्षीरं पाययति । (अतिथिः)
२. माता ____________ अन्नं भोजयति । (पुत्रः)
३. वृद्धः ____________ जम्बूफलम् आशयति । (भिक्षुकः)
४. गृहस्वामी ____________ मूषिकं भक्षयति । (मार्जारः)

विशेषः –

अद्धातुः (अत्ति) खाद्धातुः (खादति) च यद्यपि भक्षणार्थकौ तथापि तयोः णिजन्तत्वेन प्रयोगे प्रयोज्यकर्तुः द्वितीयाविभक्तिः न भवति, अपि तु तृतीयाविभक्तिः ।

यथा – कुक्कुरः मीनम् अत्ति । — बालकः कुक्कुरेण मीनम् आदयति ।
शिशुः चाकलेहं खादति । — माता शिशुना चाकलेहं खादयति ।

एतानि वाक्यानि परिशीलयत –

| अणिजन्तवाक्यम् | णिजन्तवाक्यम् |
|---|---|
| छात्रः वेदम् अधीते । | श्रोत्रियः छात्रं वेदम् अध्यापयति । |

| | |
|---|---|
| छात्रः गद्यं शृणोति । | शिक्षकः छात्रं गद्यं श्रावयति । |
| बालकः पद्यं पठति । | अध्यापकः बालकं पद्यं पाठयति । |

एतेषु वाक्येषु सर्वे धातवः शब्दकर्मकाः सन्ति। शब्दः कर्म येषां ते शब्दकर्मकाः। अधि+ इङ्, पठ, श्रु – इत्येतादृशानां धातूनां यत् कर्म तत् शब्दरूपमेव भवति, यथा – वेदः, पद्यं गद्यं च । अतः ते धातवः शब्दकर्मकाः इत्युच्यन्तें ।

जानीत –

**शब्दकर्मकाणां धातूनां णिजन्तत्वेन प्रयोगे प्रयोज्यकर्तुः द्वितीयाविभक्तिः भवति ।**

७. ७. आवरणे स्थितस्य शब्दस्य उचितविभक्त्यन्तरूपेण रिक्तस्थानं पूरयत –

१. प्रवाचकः ———————— वार्तां श्रावयति। (प्रतिनिधिः)
२. आचार्यः ———————— वेदं पाठयति। (अन्तेवासी)
३. सुरेन्द्रः ———————— गीतं श्रावयति। (राजेन्द्रः)

एतानि वाक्यानि परिशीलयत –

| **अणिजन्तवाक्यम्** | **णिजन्तवाक्यम्** |
|---|---|
| वृक्षः वर्धते । | कृषिकः वृक्षं वर्धयति । |
| वृद्धः उपविशति । | युवकः वृद्धम् उपवेशयति । |
| सज्जनः म्रियते । | दुर्जनः सज्जनं मारयति । |
| क्लेशः जायते । | रिपुः क्लेशं जनयति । |

एतेषु वाक्येषु सर्वे धातवः अकर्मकाः सन्ति ।

जानीत –

**अकर्मकधातूनां णिजन्तत्वेन प्रयोगे प्रयोज्यकर्तुः द्वितीयाविभक्तिः भवति ।**

७. ८. आवरणे स्थितस्य शब्दस्य उचितविभक्त्यन्तरूपेण रिक्तस्थानं पूरयत –

१. अम्बा ———— शाययति। (शिशुः)
२. अग्रजः ———— उत्थापयति। (अनुजः)
३. कृषिकः ———— एधयति। (नारिकेलः)
४. दुर्जनः ———— मारयति। (सज्जनः)
५. सः सर्वदा ———— जनयति। (समस्या)
६. ऐन्द्रजालिकः ———— विस्माययति। (सर्वे)
७. अहितुण्डिकः ———— क्रीडयति। (सर्पः)
८. वानरः ———— कम्पयति। (शाखा)
९. देवः ———— मोदयति। (भक्तः)
१०. शाणः ———— भ्राजयति। (मणिः)
११. विषानिलः ———— मूर्च्छयति। (मनुष्यः)

७. ९. एतेषु वाक्येषु कः प्रयोजककर्ता कश्च प्रयोज्यकर्ता इति यथोदाहरणं रिक्तस्थाने लिखत –

| | णिजन्तं वाक्यम् | प्रयोजककर्ता | प्रयोज्यकर्ता |
|---|---|---|---|
| उदा – | **पिता पुत्रं मन्दिरं गमयति ।** | **पिता** | **पुत्रः** |
| | १. शिवः शङ्करं विषयं ज्ञापयति । | ______ | ______ |
| | २. गुरुः शिष्येण पत्रं लेखयति । | ______ | ______ |
| | ३. स्वामी कर्मकरेण कार्यं साधयति । | ______ | ______ |
| | ४. सः मां गीतं श्रावयति । | ______ | ______ |
| | ५. माता पुत्रेण गुरुं वन्दयति । | ______ | ______ |
| | ६. माता पुत्रीम् औषधं पाययति । | ______ | ______ |
| | ७. सखी रमया द्वारं नोदयति । | ______ | ______ |
| | ८. सेवकेन स्वच्छतां कारयति । | ______ | ______ |
| | ९. अध्यापकः छात्रं श्लोकं पाठयति । | ______ | ______ |
| | १०. वसन्तः चैत्रेण ओदनं पाचयति । | ______ | ______ |

७. १०. आवरणे स्थितस्य प्रयोज्यकर्तुः उचितविभक्त्यन्तरूपं रिक्तस्थाने लिखत –

| | | |
|---|---|---|
| उदा – | सखी **बालिकया** वस्त्रं धारयति । | (बालिका) |
| | १. माता ______ अन्नं भोजयति । | (रुग्णः) |
| | २. गुरुः ______ श्लोकार्थं बोधयति । | (छात्राः) |
| | ३. सचिवाः ______ कार्यं कारयन्ति । | (कर्मकराः) |
| | ४. गृहस्वामी ______ वस्त्रं प्रक्षालयति । | (रजकः) |
| | ५. सुरेशः ______ श्लोकान् पाठयति । | (भवान्) |
| | ६. शिक्षकः ______ विषयं ज्ञापयति । | (छात्रः) |
| | ७. भगिनी ______ पाकं कारयति । | (पाचिका) |
| | ८. गजः ______ कम्पयति । | (वृक्षाः) |
| | ९. माता ______ शाययति । | (शिशुः) |
| | १०. रमेशः ______ चित्रं स्मारयति । | (रमाम्) |

७. ११. यथोदाहरणं णिजन्तवाक्यानि कुरुत –

उदा – शिष्याः पाठं पठन्ति । **गुरुः शिष्यान् पाठं पाठयति ।**

१. रजनी विमलायै लेखनीं ददाति । सीता ______________________________ ।

२. अहं विद्यालयं प्राप्नोमि । भ्राता ______________________________ ।

३. मित्रं गृहं गच्छति । एषः ______________________।
४. लेखकः कथाः लिखति । प्रकाशकः ______________________।
५. गृहं शोभते । सतीशः ______________________।
६. विवेकः प्रश्नं करोति । सुकेशः ______________________।
७. विक्रमः जलं पिबति भगिनी ______________________।
८. चन्द्रः प्रकाशते । सूर्यः ______________________।
९. नलिनी फलम् अश्नाति । माता ______________________।
१०. सीता गीतं शृणोति । विजया ______________________।

७. १२. कोष्ठके स्थितान् णिजन्तधातून् यथोचितं चित्वा रिक्तस्थानं पूरयत –

| | | | | | |
|---|---|---|---|---|---|
| आशि | (आशयति) | पाठि | (पाठयति) | अध्यापि | (अध्यापयति) |
| वेदि | (वेदयति) | वर्धि | (वर्धयति) | जनि | (जनयति) |
| वर्ति | (वर्तयति) | गमि | (गमयति) | पायि | (पाययति) |
| भणि | (भाणयति) | श्रावि | (श्रावयति) | भावि | (भावयति) |
| प्रापि | (प्रापयति) | गदि | (गदयति) | भक्षि | (भक्षयति) |
| सञ्चारि | (सञ्चारयति) | ज्ञापि | (ज्ञापयति) | अवगमि | (अवगमयति) |
| भोजि | (भोजयति) | हासि | (हासयति) | आटि | (आटयति) |
| बोधि | (बोधयति) | आयि | (आययति) | ग्रासि | (ग्रासयति) |

| | गत्यर्थकाः | ज्ञानार्थकाः | भक्षणार्थकाः | शब्दकर्मकाः | अकर्मकाः |
|---|---|---|---|---|---|
| १. | ________ | ________ | ________ | ________ | ________ |
| २. | ________ | ________ | ________ | ________ | ________ |
| ३. | ________ | ________ | ________ | ________ | ________ |
| ४. | ________ | ________ | ________ | ________ | ________ |
| ५. | ________ | ________ | ________ | ________ | ________ |

७. १३. एतेषु वाक्येषु प्रयोज्यकर्तुः द्वितीयाविभक्तिः किमर्थं प्रयुक्ता अस्ति इति परिशील्य यथोदाहरणम् अङ्कयत –

१. श्रीकृष्णः अर्जुनं गीतां बोधयति ।
२. अनुचरः मन्त्रिणं वार्तां श्रावयति ।
३. विदूषकः जनान् हासयति ।
४. भ्राता अनुजं विपणिम् आययति ।

५. आचार्यः शिष्यं मन्त्रार्थं वेदयति ।
६. जननी किशोरं गीतं गापयति ।
७. नर्तकी छात्रां नर्तयति ।
८. भिषक् रोगिणं गुलिकां गारयति ।
९. पत्रवाहकः पत्राणि ग्रामं प्रापयति ।
१०. माता पुत्रं मोदकम् आशयति ।

| प्रयोज्यकर्ता | णिजन्तधातुः | गत्यर्थकः | बुद्ध्यर्थकः | प्रत्यवसानार्थकः | शब्दकर्मकः | अकर्मकः |
|---|---|---|---|---|---|---|
| १. अर्जुनः | बोधि | | ✓ | | | |
| २. ........... | ............ | | | | | |
| ३. जनाः | हासि | | | | | |
| ४. ........... | ............ | | | | | |
| ५. ........... | ............ | | | | | |
| ६. ........... | ............ | | | | | |
| ७. ........... | ............ | | | | | |
| ८. ........... | ............ | | | | | |
| ९. ........... | ............ | | | | | |
| १०. ........... | ............ | | | | | |

## ज्ञानवर्धनी

**विशेषः – १. दृश्‌धातोः जल्पतिप्रभृतीनां च णिजन्तत्वेन प्रयोगे प्रयोज्यकर्तुः द्वितीयाविभक्तिः भवति ।**

यथा – १. जनकः आत्मजं नाटकं दर्शयति ।
२. सुराः नरं जल्पयन्ति ।
३. पथिकः भिक्षुकम् आभाषयति ।

**२. हरति, करोति – इत्येतयोः धात्वोः णिजन्तत्वेन प्रयोगे प्रयोज्यकर्तुः द्वितीयाविभक्तिः विकल्पेन भवति ।**

यथा – १. राजा दूतं / दूतेन वार्तां हारयति ।
२. देवः भक्तं / भक्तेन सत्कार्यं कारयति ।

# ८. जातस्य हि ध्रुवो मृत्युः

**क्तप्रत्ययः**

एतानि गीतावाक्यानि सावधानं पठत –

अश्रद्धया **हुतं दत्तं** तपस्तप्तं **कृतं** च यत्।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह। (१७.२८)
ततः पदं तत्परिमार्गितव्यं यस्मिन् **गता** न निवर्तन्ति भूयः।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः **प्रसृता** पुराणी॥ (१५.४)
इति गुह्यतमं शास्त्रम् इदमुक्तं मयानघ। (१५.२०) (इदम् **उक्तम्**)
कर्तव्यानीति मे पार्थ **निश्चितं** मतमुत्तम्। (१८.६) (**मतम्** उत्तमम्)

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानि पदानि क्तप्रत्ययान्तानि सन्ति।)

यथोदाहरणं रिक्तस्थानं पूरयत –

| क्तप्रत्ययान्तपदम् | धातुः + प्रत्ययः |
|---|---|
| हुतं | हु + क्त (नपुंसकलिङ्गं प्रथमैकवचनम्) |
| दत्तं | दा + —— (नपुंसकलिङ्गं प्रथमैकवचनम्) |
| तप्तं | तप् + —— (नपुंसकलिङ्गं प्रथमैकवचनम्) |
| कृतं | कृ + —— (नपुंसकलिङ्गं प्रथमैकवचनम्) |
| गताः | गम् + —— (पुंलिङ्गं प्रथमाबहुवचनम्) |
| प्रसृता | प्र + सृ + —— (स्त्रीलिङ्गं प्रथमैकवचनम्) |
| उक्तं | वच् + क्त (नपुंसकलिङ्गं प्रथमैकवचनम्) |
| निश्चितम् | निस् + चि + —— (नपुंसकलिङ्गं प्रथमैकवचनम्) |
| मतम् | मन् + —— (नपुंसकलिङ्गं प्रथमैकवचनम्) |

'क्त'प्रत्ययस्य प्रयोगः कस्मिन् अर्थे कथञ्च क्रियते इति वयम् अधुना जानीम –

एतां कथां सावधानं पठत –

धनदासः नाम कश्चित् गृहस्थः आसीत्। तस्य प्रतिवेशी आसीत् धूर्तमतिः। धनदासः **लुब्धः**, धूर्तमतिः वञ्चनानिपुणः च।

कदाचित् धूर्तमतिना **चिन्तितं** यत् 'धनदासः मूर्खः, अतः केनापि उपायेन एतं वञ्चयामि' इति। एकदा तेन धनदासस्य गृहं **गतम् उक्तं** च – "भोः धनदास ! अद्य प्रातः मम गृहं बहवः अतिथयः **आगताः**। तेभ्यः पाकं कर्तुं पर्याप्तानि भाण्डानि मम गृहे न सन्ति। भवान् कानिचन भाण्डानि ददाति चेत् उपयोगात् परं तानि झटिति प्रतिदास्यामि" इति। धनदासेन तु अनिच्छया चत्वारि भाण्डानि **दत्तानि**। तानि स्वीकृत्य धूर्तमतिः गृहं **गतः**।

परेद्यवि एव तेन न केवलं धनदासस्य भाण्डानि, अपि तु कानिचन नूतनानि भाण्डानि अपि **प्रत्यर्पितानि**। धनदासेन स्वस्य भाण्डानि **स्वीकृतानि**, परन्तु अन्यानि नूतनानि भाण्डानि दृष्ट्वा "एतानि मदीयानि न" इति **उक्तम्**। तदा धूर्तमतिना उच्चैः विहस्य **घोषितम्** – "अये धनदास ! भवता दत्तानि भाण्डानि ह्यः रात्रौ मम गृहे **प्रसूतानि**। अतः

एतानि सर्वाणि भाण्डानि भवदीयानि एव'' इति । लोभाविष्टः धनदासः नूतनानि भाण्डानि प्राप्य **प्रमुदितः** ।

कानिचन दिनानि **व्यतीतानि** । कदाचित् धूर्तमतिः धनदासस्य गृहम् **आगतः** । तेन पुनः कानिचन भाण्डानि **प्रार्थितानि** । एतस्मिन् अवसरे लुब्धेन धनदासेन महता उत्साहेन बहूनि भाण्डानि **दत्तानि** ।

धनदासेन दत्तानि भाण्डानि धूर्तमतिना **नीतानि** । परन्तु मासे अतीतेऽपि तानि न **प्रत्यर्पितानि** । तदा धनदासेन धूर्तमतेः गृहं गत्वा **पृष्टम्** – ''भोः धूर्तमते ! मासः **अतीतः** । अद्यापि भवता मम भाण्डानि न **प्रतिदत्तानि** । कुत्र सन्ति मम भाण्डानि ?'' इति ।

धूर्तमतिना म्लानमुखेन **कथितम्** – ''किं वदानि मित्र ! भवता दत्तानि भण्डानि **मृतानि**'' इति । धनदासेन क्रोधेन **गर्जितम्** –''रे वञ्चक ! भाण्डानि कदापि म्रियन्ते किम् ? अलीकं वचनं तव'' इति । धूर्तमतिना शान्तस्वरेण **उक्तम्** – ''भोः धनदास ! अलं कोपेन, यथा पूर्वं भाण्डानि **जातानि** तथा इदानीं तानि **मृतानि** । जातस्य हि ध्रुवो मृत्युः ।''

धनदासेन लज्जया शिरः अवनमय्य ततः **प्रतिनिवृत्तम्** ।

एतानि वाक्यानि सावधानं परिशीलयत –

| | |
|---|---|
| अनुजया गीताश्लोकः **पठितः** । | पितामह्या माला **रचिता** । |
| पितामहेन पूजा **कृता** । | पित्रा उद्यानं **गतम्** । |

एतेषु वाक्येषु क्तप्रत्ययान्तरूपाणि स्थूलाक्षरैः मुद्रितानि सन्ति ।

➪ 'क्त' इत्येषः कश्चन प्रत्ययः । एषः प्रत्ययः धातोः परतः भवति ।

यथा – कृ + क्त (त) = कृत

अत्र 'कृ' इति धातुः, 'क्त' इति प्रत्ययः, 'कृत' इति 'कृ'धातोः क्तप्रत्ययान्तं रूपम् ।

पठ् + क्त( इत) = पठितः

अत्र 'पठ्' इति धातुः 'क्त' इति प्रत्ययः, 'पठित' इति 'पठ'धातोः क्तप्रत्ययान्तं रूपम् ।

कृ धातोः क्तप्रत्यये कृते 'कृत' इति रूपम् । परन्तु पठ् धातोः क्तप्रत्यये कृते तु रूपं भवति 'पठित' इति । अत्र कारणं तु 'इड्'(इ) इत्यादयः । तत्सम्बन्धी विशेषः अयम् अस्ति –

धातुः त्रिविधः – सेट्, अनिट्, वेट् च । यत्र धातुः सेट् तत्र **क्त** प्रत्यये कृते **'इत'** इति दृश्यते । यत्र धातुः अनिट् तत्र

क्तप्रत्यये कृते 'त' इति दृश्यते । यत्र पुनः धातुः 'वेट्' भवति तत्र क्तप्रत्यये कृते 'त' इति 'इत' इति वा दृश्यते ।[१]

अन्यानि कानिचन क्तप्रत्ययान्तरूपाणि –

| धातुः | क्तप्रत्ययान्तरूपम् | धातुः | क्तप्रत्ययान्तरूपम् |
|---|---|---|---|
| पठ् | पठित | कृ | कृत |
| रच् | रचित | गम् | गत |

⇨ क्तप्रत्ययान्तरूपं त्रिषु लिङ्गेषु वचनेषु च भवति ।

| यथा – *एकवचनम्* | *द्विवचनम्* | *बहुवचनम्* |
|---|---|---|
| पठितः | पठितौ | पठिताः (पुंलिङ्गे) |
| पठिता | पठिते | पठिताः (स्त्रीलिङ्गे) |
| पठितम् | पठिते | पठितानि (नपुंसकलिङ्गे) |

⇨ क्तप्रत्ययान्तरूपस्य प्रयोगः भूतकालार्थे भवति ।

**कर्मणि प्रयोगे यथा –**

तेन श्लोकः **पठितः** । मया योगः **प्रोक्तः** । त्वया वाक्यम् **उक्तम्** ।

कर्मणि लङ्लकारं प्रयुज्य एषः एव अर्थः वक्तुं शक्यः यथा –

तेन श्लोकः **अपठ्यत** । मया योगः **प्रौच्यत** । त्वया वाक्यम् **औच्यत** ।

क्तप्रत्ययान्तस्य प्रयोगेण, कर्मणि लङ्लकारस्य प्रयोगेण च रचितानि एतानि समानार्थकानि वाक्यानि परिशीलयत –

अध्यापकेन पाठः बोधितः । अध्यापकेन पाठः अबोध्यत ।
भवत्या कार्यं कृतम् । भवत्या कार्यम् अक्रियत ।
युष्माभिः फलानि खादितानि । युष्माभिः फलानि अखाद्यन्त ।

**भावे प्रयोगे यथा –**

बालेन **हसितम्** । वृक्षेण **कम्पितम्** । बालया **लज्जितम्** । (१६.१३)

भावे लङ्लकारस्य प्रयोगेण एषः एव अर्थः वक्तुं शक्यः यथा –

बालेन **अहस्यत** । वृक्षेण **अकम्प्यत** । बालया **अलज्ज्यत** ।

अधस्तनेषु वाक्येषु क्तप्रत्ययान्तशब्दघटितानि भावार्थकलकारघटितानि च वाक्यानि सन्ति । तेषाम् अर्थः समानः । परिशीलयत –

शिशुभिः रुदितम् । शिशुभिः अरुद्यत ।
पुष्पैः विकसितम् । पुष्पैः व्यकस्यत ।
फलेन पतितम् । फलेन अपत्यत ।
सिंहाभ्यां गर्जितम् । सिंहाभ्याम् अगर्ज्यत ।

**भावे प्रयोगे क्रियापदं सदा एकवचनान्तं भवति इति ज्ञेयम् ।**

१. एतद्विषये अधिकं विवरणं संस्कृतभारत्या प्रकाशिते 'इड्व्यवस्था'पुस्तके वर्तते ।

## अभ्यासः

८. १. एतेषां क्तप्रत्ययान्तरूपाणि लिखत -

यथा - जि- जित (६.६)

१. कृ - ________ (१७.२८)

२. स्मृ - ________ (१७.२३)

३. मृ - ________ (२.२६)

४. श्रु - ________ (१८.७२)

यथा - क्रीड् - क्रीडित

५. जीव् - ________ (१.३२)

यथा - कुप् - कुपित

६. कम्प् - ________

७. रक्ष् - ________

यथा - गम् - गत (८.१५)

८. मन् - ________ (३.३१)

९. हन् - ________ (२.३७)

१०. तन् - ________ (२.१७)

यथा - श्रम् - श्रान्त

११. शम् - ________ (१८.५३)

१२. क्रम् - ________

यथा - वप् - उप्त

१३. स्वप् - ________

यथा - क्रुध् - क्रुद्ध

१४. सिध् - ________ (१६.१४)

१५. वृध् - ________

यथा - दह् - दग्ध

१६. स्निह् - ________ (१७.८)

१७. दुह् - ________

यथा - नश् - नष्ट (४.२)

१८. विश् - ________

१९. दृश् - ________ (२.१६)

**विशेषरूपाणि**

| | | |
|---|---|---|
| धा - हित | वह् - ऊढ | सह् - सोढ |
| पच् - पक्व | जन् - जात | वच् - उक्त |
| रम् - रत | अस् - भूत | बन्ध् - बद्ध |
| प्रच्छ् - पृष्ट | सृज् - सृष्ट | कृष् - कृष्ट |

८. २. एतत् प्रकरणम् अभिनयत-

अर्जुनः - इदानीं किं करवाणि ? गृहपाठं करवाणि उत दूरदर्शनं पश्यानि ? ह्यः दूरदर्शनं **दृष्टं**, मातुः आगमनात् पूर्वं गृहपाठः न **समापितः**, अतः मया सम्यक् तर्जनं **प्राप्तम्** । किं करवाणि ? गृहपाठं कर्तुं मनः न उत्सहते ।

गीता - (श्लोकं गायन्ती अर्जुनस्य प्रकोष्ठं प्रविशति ।)

इन्द्रियाणां हि चरतां यन्मनोऽनु विधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ (२-६७)

तस्मात् महाबाहो, यस्य इन्द्रियाणि विषयेभ्यः सर्वशः **निगृहीतानि** तस्य प्रज्ञा **प्रतिष्ठिता** । हे अर्जुन ! भवता इतोऽपि गृहपाठः न **आरब्धः** ? साहाय्यम् आवश्यकं चेत् वदतु ।

अर्जुनः - भगिनि ! आगच्छतु । कञ्चित् कालं दूरदर्शनं पश्याव । ततः गृहपाठं करवाव ।

गीता - प्रथमं गृहपाठं करोतु । ततः अन्यत् चिन्तनम् ।

अर्जुनः - अस्तु ।

अम्बा - (प्रविशति) गीते, मम गृहागमने अद्य विलम्बः **जातः** ।

गीता - चिन्ता मास्तु, अम्ब ! मया कानिचन गृहकार्याणि **कृतानि** अपि ।

अम्बा - किं किं **कृतं** भवत्या ?

गीता - मया गृहपाठः **समापितः** । अर्जुनेन अपि गृहपाठः **कारितः** । मधुरं **खादितम्** । अर्जुनाय अपि **दत्तम्** । किञ्चित् मधुरं भवत्याः कृते अत्र **रक्षितम्** । तातस्य कृते पृथक् **स्थापितम्** । पूजाप्रकोष्ठः **मार्जितः** । शाटिका प्रक्षाल्य **प्रसारिता** । शुष्काणि वस्त्राणि **पुटीकृतानि** । बाष्पस्थालिका अपि **सज्जीकृता** ।

अम्बा - कियन्ति कार्याणि **कृतानि** भवत्या एकाकिन्या !

गीता - मैवम् अम्ब ! एकाकिन्या न । अर्जुनेनापि साहाय्यं **कृतम्** ।

अम्बा - अहो, प्रशंसनीयास्ति भवती ।

### ८. ३. एतत् प्रकरणम् अवलम्ब्य उचितेन क्तप्रत्ययान्तशब्देन रिक्तस्थलानि पूरयत –

१. अर्जुनेन दूरदर्शनं ________ ।
२. अर्जुनेन तर्जनं ________ ।
३. गीतया गृहपाठः ________ ।
४. गीतया अर्जुनाय मधुरं ________ ।
५. गीतया अर्जुनेन गृहपाठः ________ ।
६. गीतया शाटिका प्रक्षाल्य ________ ।
७. गीतया शुष्काणि वस्त्राणि ________ ।
८. गीतया बाष्पस्थालिका ________ ।
९. गीतया पूजाप्रकोष्ठः ________ ।
१०. कियन्ति कार्याणि ________ ।

### ८. ४. भगवद्गीतायाः श्लोकाभ्यासः

भगवद्गीतायाः तृतीयाध्यायस्य नाम अस्ति कर्मयोगः । तत्र षट्त्रिंशत्तमे श्लोके अर्जुनस्य कश्चन प्रश्नः अस्ति । *'अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ?'* इति । सप्तत्रिंशत्तमश्लोकात् आरभ्य त्रिचत्वारिंशत्तमश्लोकपर्यन्तं भगवतः श्रीकृष्णस्य उत्तरम् अस्ति । तान् श्लोकान् उच्चैः पठत । श्लोकेषु स्थितानि क्तप्रत्ययान्तरूपाणि एकत्र संगृह्णीत ।

➪ अयं क्तप्रत्ययः यथा कर्मणि भावे चार्थे तथा कर्तरि अपि अर्थे सम्भवति । कर्तरि प्रयोगो यथा –

अ) तत्र अकर्मकधातोः कर्तरि क्तः

यथा – बालः हसितः ।

भावे क्तप्रत्यये कृतेऽपि अयमेव अर्थः सिध्यति –

बालेन हसितम् ।

भावे लङ्लकारे कृतेऽपि एषः एव अर्थः सिध्यति –

बालेन अहस्यत ।

पूर्वोक्तानि त्रिविधानि अपि वाक्यानि अत्र दर्शितानि सन्ति –

| कर्तरि क्तः | भावे क्तः | भावे लङ्लकारः |
|---|---|---|
| १. भाण्डानि **जातानि** । | भाण्डैः **जातम्** । | भाण्डैः अजायत । |
| २. भाण्डानि **मृतानि** । | भाण्डैः **मृतम्** । | भाण्डैः अम्रियत । |
| ३. फलं **पतितम्** । | फलेन **पतितम्** । | फलेन अपत्यत । |
| ४. पुष्पं **विकसितम्** । | पुष्पेण **विकसितम्** । | पुष्पेण व्यकस्यत । |
| ५. वानरः **स्थितः** । | वानरेण **स्थितम्** । | वानरेण अस्थीयत । |

८. ५. यथोदाहरणं भावार्थकक्तान्तघटितानि वाक्यानि कर्त्रर्थकक्तान्तघटिततया परिवर्तयत –

| | भावे क्तः | कर्तरि क्तः |
|---|---|---|
| यथा – | भाण्डैः जातम् । | भाण्डानि जातानि । |
| | १. वृक्षेण कम्पितम् । | ______________ । |
| | २. पक्वफलैः पतितम् । | ______________ । |
| | ३. बालिकया हसितम् । | ______________ । |
| | ४. बालकेन हसितम् । | ______________ । |
| | ५. शिशुभिः रुदितम् । | ______________ । |
| | ६. वृक्षेण वृद्धम् । | ______________ । |
| | ७. मात्रा कुपितम् । | ______________ । |
| | ८. मातामह्या देवालये स्थितम् । | ______________ । |

९. बालेन धावितम् । ______________________ ।

१०. चोरेण भीतम् । ______________________ ।

आ) गत्यर्थकधातोः कर्तरि क्तः –

गत्यर्थकधातोः क्तप्रत्ययः कर्तरि अपि भवति ।

(गमनम् इति येषाम् अर्थः ते गत्यर्थकाः ।)

एतानि वाक्यानि सावधानतया परिशीलयत –

१. बालकः विद्यालयं **गतः** ।

२. बालिका विद्यालयं **गता** ।

३. अतिथयः गृहम् **आगताः** ।

४. छात्रः परीक्षाम् **उत्तीर्णः** ।

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानि पदानि गत्यर्थकधातूनां क्तप्रत्ययान्तानि रूपाणि । अत्र क्तप्रत्ययः कर्तरि अर्थे वर्तते ।

८. ६. यथोदाहरणं कर्मार्थकक्तान्तघटितानि वाक्यानि कर्त्रर्थकक्तान्तघटिततया परिवर्तयत –

| | कर्मार्थकक्तान्तघटितानि | कर्त्रर्थकक्तान्तघटितानि |
|---|---|---|
| यथा – | **छात्रेण विद्यालयः गतः ।** | **छात्रः विद्यालयं गतः ।** |

१. रामेण वनं गतम् । ______________________ ।

२. सीतया रामः अनुगतः । ______________________ ।

३. लक्ष्मणेन रामः अनुसृतः । ______________________ ।

४. तेन ग्रामः व्रजितः । ______________________ ।

५. भक्तैः भवसागरः तीर्णः । ______________________ ।

६. अतिथिभिः गृहम् आगतम् । ______________________ ।

७. छात्रेण ग्रन्थालयः यातः । ______________________ ।

८. कपिभिः सागरः तीर्णः । ______________________ ।

९. गोविन्देन कष्टम् अतीतम् । ______________________ ।

१०. बालिकया सङ्गीतपरीक्षा उत्तीर्णा । ______________________ ।

इ) श्लिषादिभ्यः कर्तरि क्तः

श्लिष्-शीङ्-स्था-आस-वस-जन-रुह-जीर्यतयः श्लिषादयः धातवः। तेभ्यः कर्तरि क्तप्रत्ययः भवति। यथा -

१. हरिः लक्ष्मीम् **आश्लिष्टः**।
२. विष्णुः शेषम् **अधिशयितः**।
३. हरिः वैकुण्ठम् **अधिष्ठितः**।
४. भक्तः शिवम् **उपासितः**। (परिचर्यां कृतवान्।)
५. भक्तः हरिदिनम् **उपोषितः**। (उपवासं कृतवान्।)
६. लक्ष्मणः रामम् **अनुजातः**। (अनुसृत्य जातः।)
७. कृष्णः रथम् **आरूढः**।
८. देवः विश्वम् **अनुजीर्णः**। (व्याप्तवान्।)

**अवधेयम्**

**धातोः कर्मणि भावे च क्तप्रत्ययः भवति भूतकालार्थे।**
**कर्मणि क्तः यथा** - *वानरेण फलं खादितम्।*
**भावे क्तः यथा** - *अश्वेन धावितम्।*
**अकर्मकधातोः कर्तरि अपि क्तप्रत्ययः भवति भूतकालार्थे।**
**यथा** - *बालः हसितः।*
**गत्यर्थकधातोः कर्तरि अपि क्तप्रत्ययः भवति भूतकालार्थे।**
**यथा** - *गोविन्दः नगरं गतः।*
**श्लिषादिभ्यः धातुभ्यः कर्तरि अपि क्तप्रत्ययः भवति भूतकालार्थे।**
**यथा** - *हरिः लक्ष्मीम् आश्लिष्टः।*

८. ७. विवरणानुगुणं यथोदाहरणं कोष्ठकं पूरयत -

अधः दत्तानि वाक्यानि पठत। वाक्यं शुद्धम् अस्ति चेत् 'शुद्धम्' इति स्तम्भे ✓ इति चिह्नं कृत्वा तत्र कारणं दर्शयितुम् उचिते स्तम्भे ✓ इति चिह्नं कुरुत। अशुद्धम् अस्ति चेत् 'शुद्धम्' इति स्तम्भे X इति चिह्नं कृत्वा तत्र कारणं दर्शयितुम् उचिते स्तम्भे X इति चिह्नं कुरुत।

जानीत - ✓ = अस्ति। X = नास्ति।

| क्तप्रत्ययान्तघटितं वाक्यम् | शुद्धम् | गत्यर्थकधातुः | श्लिषादयः (उपसर्गसहिताः) | अकर्मकधातुः |
|---|---|---|---|---|
| यथा – सीता देवालयं दृष्टा । | X | X | X | X |
| १. बालकः ग्रन्थं पठितः । | | | | |
| २. बालकः विद्यालयं गतः । | | | | |
| ३. लता पाठशालां गता । | | | | |
| ४. लता पाठशालां वीक्षिता । | | | | |
| ५. लता हसिता । | | | | |
| ६. विष्णुः गरुडम् आरूढः । | | | | |
| ७. हरिः वैकुण्ठम् अधिष्ठितः । | | | | |

८. ८. अधः गीताश्लोकानां संख्या दत्ता अस्ति । तान् श्लोकान् उच्चैः पठत –

| | | | | |
|---|---|---|---|---|
| ३.२० | ४.३ | ४.५ | ४.१३ | १५.१८ |
| १४.१ | ५.१९ | १५.२ | १५.१८ | ५.१९ |
| १५.२ | १८.६३ | १८.७३ | १५.२० | १८.७३ |

८. ९. यथोदाहरणम् एतत् कोष्ठकं पूरयत –

| श्लोकांशः | श्लोकसंख्या | क्तप्रत्ययान्तरूपम् | प्रयोगः |
|---|---|---|---|
| यथा – **प्रसृतास्तस्य शाखाः ।** | १५ – २ | **प्रसृताः** | **कर्तरि** |
| १. अधश्च मूलान्यनुसन्ततानि । | ______ | ______ | ______ |
| २. इदमुक्तं मयानघ । | ______ | ______ | ______ |
| ३. यस्मात्क्षरमतीतोऽहम् । | ______ | ______ | ______ |
| ४. प्रथितः पुरुषोत्तमः । | ______ | ______ | ______ |
| ५. आस्थिता जनकादयः । | ______ | ______ | ______ |
| ६. योगः प्रोक्तः पुरातनः । | ______ | ______ | ______ |
| ७. बहूनि मे व्यतीतानि । | ______ | ______ | ______ |

८. चातुर्वर्ण्यं मया सृष्टम्। ______ ______ ______ ______

९. इहैव तैर्जितः सर्गः। ______ ______ ______

१०. येषां साम्ये स्थितं मनः। ______ ______ ______

११. परां सिद्धिमितो गतः। ______ ______ ______

१२. इति ते ज्ञानमाख्यातम्। ______ ______ ______

१३. नष्टो मोहः। ______ ______ ______

१४. स्मृतिर्लब्धा। ______ ______ ______

१५. स्थितोऽस्मि गतसन्देहः। ______ ______ ______

➪ क्तप्रत्ययान्तं रूपं विशेषणं भवति। अतः तद् विशेषण-विशेष्यनियमवशात् विशेष्यस्य लिङ्गं विभक्तिं वचनं च अनुसरति। उदाहरणद्वयम् अवलोकयत -

१. कर्मणि क्तः -

लिङ्गं यथा -

छात्रेण
- पाठः पठितः। (पुंलिङ्गम्)
- पत्रिका पठिता। (स्त्रीलिङ्गम्)
- पुस्तकं पठितम्। (नपुंसकलिङ्गम्)

वचनं यथा -

कविना
- काव्यं लिखितम्। (एकवचनम्)
- काव्ये लिखिते। (द्विवचनम्)
- काव्यानि लिखितानि। (बहुवचनम्)

विभक्तिः यथा -

तेन
- लिखिता कविता एषा। (प्रथमाविभक्तिः)
- लिखितां कवितां प्रकाशयितुं प्रेषय। (द्वितीयाविभक्तिः)
- लिखितया कवितया अहं सन्तुष्टः। (तृतीयाविभक्तिः)
- लिखितायै कवितायै केऽपि पारितोषिकं दद्युः। (चतुर्थीविभक्तिः)
- लिखितायाः कवितायाः जनाः प्रेरिताः भवन्ति। (पञ्चमीविभक्तिः)
- लिखितायाः कवितायाः शीर्षकम् उत्तमम् अस्ति। (षष्ठीविभक्तिः)
- लिखितायां कवितायां प्रेरणाशक्तिः अस्ति। (सप्तमीविभक्तिः)

२. कर्तरि क्तः –

लिङ्गं यथा –

बालकः रुदितः । (पुंलिङ्गम्)

बालिका रुदिता । (स्त्रीलिङ्गम्)

मित्रं रुदितम् । (नपुंसकलिङ्गम्)

वचनं यथा –

शिशुः रुदितः । (एकवचनम्)

शिशू रुदितौ । (द्विवचनम्)

शिशवः रुदिताः । (बहुवचनम्)

विभक्तिः यथा –

रुदितः शिशुः मातरम् उपसरति । (प्रथमाविभक्तिः)

रुदितं शिशुम् अहम् उन्नयामि । (द्वितीयाविभक्तिः)

रुदितेन शिशुना सह अहम् उद्यानं गच्छामि । (तृतीयाविभक्तिः)

रुदिताय शिशवे अहं गुडं ददामि । (चतुर्थीविभक्तिः)

रुदितात् शिशोः अहं कर्तरीं स्वीकरोमि । (पञ्चमीविभक्तिः)

रुदितस्य शिशोः नाम रमेशः । (षष्ठीविभक्तिः)

रुदिते शिशौ मम अनुकम्पा अस्ति । (सप्तमीविभक्तिः)

८. १०. अधस्तनसम्भाषणं पठत । तत्र स्थूलाक्षरैः दर्शितानि क्तप्रत्ययान्तरूपाणि विशेषणानि सन्ति । तानि जानीत –

माता – अर्जुन, अत्र आगच्छतु । अद्य किं किं पठितम् ?

अर्जुनः – अद्य काचित् विनोदजनिका कथा **पठिता** ।

माता – **पठितायाः** कथायाः शीर्षकं किम् ?

अर्जुनः – **पठितायाः** कथायाः शीर्षकं 'जातस्य हि ध्रुवो मृत्युः' इति ।

माता – स तु गीताश्लोकस्य अंशः । तत्र कुतः विनोदः ?

अर्जुनः – भवती अपि तां कथां पठतु । तत्र भाण्डानि जायन्ते । **जातानि** भाण्डानि म्रियन्ते ।

माता – आनयतु अत्र तां कथाम् । (पठित्वा) सत्यमेव विनोदजनिका अस्ति एषा कथा ।

अर्जुनः – **पठितया** कथया गीताश्लोकस्य कः सम्बन्धः ? कः गीताश्लोकः सः ?

माता – जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥२.२७॥

कुरुक्षेत्रे 'अहं युद्धं न करोमि। भीष्मद्रोणादयः मम पूजार्हाः। तान् अहं न हन्मि' इति **कृपाविष्टं,** रथे **उपविष्टं** च अर्जुनं भगवान् श्रीकृष्णः आत्मतत्त्वम् अबोधयत् यत् यस्य जन्म सम्पन्नं तस्य मृत्युः **निश्चितः** इति। ततः सः एव क्षत्रिय**कुलोत्पन्नं** तं तद्धर्मं स्मारयति।

अर्जुनः – अस्तु अम्ब, परन्तु तेन अस्माकं जीवनेन कः सम्बन्धः ?

माता – **युक्तः** प्रश्नः, वत्स ! इदं सदा स्मरणीयं यत् अस्माकं जीवनं न शाश्वतम्। तस्य अन्तः निश्चितः। एतत् सत्यं मनसि निधाय एव सदा जीवनं करणीयम्।

अर्जुनः – अम्ब, एतदेव तत्त्वं इदं गीतम् अपि वदति खलु ?

जीवनं न शाश्वतं, वैभवं न हि स्थिरम्।
स्वार्थलेपनं विना यत् कृतं हि तच्चिरम् ॥
सरलता स्वजीवने चिन्तने सदोच्चता।
**समाजपोषिता** वयं, *समाजपोषकाश्चिरम् ॥ध्येयपथिक साधक...॥*

माता – साधु साधु, वत्स ! सम्यक् चिन्तितं भवता।
वयं समाजेन पोषिताः, समाजस्य पोषणम् अस्माकं कर्तव्यम्।

८. ११. एते सुभाषिते उच्चैः पठत। तत्र क्तप्रत्ययान्तरूपाणि चित्वा अधः लिखत –

भोगा न भुक्ता वयमेव भुक्ताः तपो न तप्तं वयमेव तप्ताः।
कालो न यातो वयमेव याताः तृष्णा न जीर्णा वयमेव जीर्णाः ॥

(अस्माभिः भोगाः न भुक्ताः, अपि तु भोगैः वयमेव भुक्ताः। अस्माभिः तपः नाचरितम्। किन्तु तपसा वयमेव परितप्ताः। कालः न गतः। किन्तु वयमेव गताः। तृष्णा जीर्णा नाभवत्, वयमेव जीर्णाः स्मः।)

अद्यैव हसितं गीतं पठितं यैः शरीरिभिः।
अद्यैव ते न दृश्यन्ते कष्टं कालस्य चेष्टितम् ॥

__________ __________ __________ __________ __________ __________

__________ __________ __________ __________ __________ __________

# ९. ब्रह्मार्पणम्

सतिसप्तमी

एतेषु गीतावाक्येषु स्थूलाक्षरैः मुद्रितानि पदानि सावधानं परिशीलयत –

**प्रवृत्ते शस्त्रसम्पाते** धनुरुद्यम्य पाण्डवः ।
हृषीकेशं तदा वाक्यमिदमाह महीपते ॥ (१.२०)
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते **हन्यमाने शरीरे** ॥ (२.२०)
रजस्येतानि (**रजसि** एतानि) जायन्ते **विवृद्धे** भरतर्षभ । (१४.१२)
तमस्येतानि (**तमसि** एतानि) जायन्ते **विवृद्धे** कुरुनन्दन । (१४.१३)
यदा **सत्त्वे प्रवृद्धे** तु प्रलयं याति देहभृत् । (१४.१४)

स्थूलाक्षरैः लिखितानि एतानि पदानि सावधानं परिशीलयत –

**प्रवृत्ते शस्त्रसम्पाते** पाण्डवः आह । **रजसि विवृद्धे** एतानि जायन्ते ।
**हन्यमाने शरीरे** आत्मा न हन्यते । **तमसि विवृद्धे** एतानि जायन्ते ।
**सत्त्वे प्रवृद्धे** देहभृत् प्रलयं याति ।

एतेषु उदाहरणेषु शस्त्रसम्पाते प्रवृत्तिः, पाण्डवे वचनम् इत्यादिना प्रतिवाक्ये द्वे क्रिये भवतः । तत्र एका क्रिया ज्ञापिका भवति । अन्या पुनः ज्ञाप्या । ज्ञापिका क्रिया यत्र भवति ततः सप्तमी । इयं सतिसप्तमी इत्युच्यते । वयम् अधुना इमं विषयं जानीम –

एतां कथां सावधानं पठत –

कदाचित् महामुनिः व्यासः यमुनानद्याः अन्यत् तीरं गन्तुम् इष्टवान् । सः नौकायाः प्रतीक्षां कुर्वन् नदीतीरे स्थितवान् आसीत् । एवं **तस्मिन् स्थिते** काश्चन गोप्यः दुग्धं नवनीतं च गृहीत्वा तत्र आगताः । ताः अपि नौकां प्रतीक्षमाणाः तत्र स्थिताः । किन्तु **सूर्ये** अस्तं **गते** अपि नौका नागता ।

''महामुने ! कापि नौका नागता एव । इदानीं किं करवाम ?'' इति ताभिः पृष्टम् । व्यासः उक्तवान् – ''चिन्ता मास्तु । अहं भवतीः नदीं तारयामि । परन्तु नौकायाः प्रतीक्षां कुर्वन् अहं श्रान्तः अस्मि । **महत्यां बुभुक्षायां सत्याम्** अहं किमपि कर्तुम् अशक्तः अस्मि । भवत्यः किमपि यच्छन्ति किम् ?'' गोपीभिः किञ्चित् दुग्धं नवनीतं च दत्तम् । **भक्षणे समाप्ते** महर्षिः यमुनायाः पारगमनविषये किमपि कुर्यात् इति ताभिः चिन्तितम् । परन्तु महर्षिणा किमपि न उक्तम् एव । '' महर्षे ! यमुनायाः पारगमनस्य का कथा ?'' इति **गोपीषु पृच्छन्तीषु सतीषु** व्यासः नदीम् उपसृत्य प्रार्थनां कृतवान् – ''हे यमुने ! यदि मया अद्य किमपि न खादितं तर्हि तेन महिम्ना भवती नदीजलस्य तथा विभागं करोतु येन वयं सुखेन अन्यत् तीरं गन्तुं शक्नुयाम ।''

एवं व्यासेन **प्रार्थनायां कृतायां** यमुना प्रसन्ना अभवत् । सा द्विधा विभक्ता । **यमुनायां विभक्तायां** तत्र कश्चन मार्गः अपि दृष्टः । एतत् सर्वं दृष्टवतीनां गोपीनाम् आश्चर्यं सञ्जातम् । ताः मनसि चिन्तितवत्यः – ''किञ्चित्कालात्

पूर्वम् अनेन मुनिना दुग्धं नवनीतं च याचित्वा खादितम्। किन्तु अयं वदति 'मया किमपि न खादितम्' इति। यमुनया अपि तस्मिन् विश्वसितम्। कथम् एतत् शक्यम् ?' इति। एतस्य रहस्यं किमिति **प्रश्ने कृते** महामुनिः उक्तवान् – "भवतीभिः दुग्धं नवनीतं च अवश्यं दत्तम्। परन्तु मया तत् न खादितम् " इति।

पुनरपि सः एव उक्तवान् – "मनुष्यः कर्म करोति एव। परं तत् कर्म ब्रह्मार्पणबुद्ध्या न करोति। यदि सः ब्रह्मार्पणबुद्ध्या करोति तर्हि तस्य कर्मणः बन्धनं न भवति। कर्म कृत्वापि सः कर्मफलरहितः भवति। तस्मात् लोकदृष्ट्या सः कर्म कुर्वन्नपि पारमार्थिकदृष्ट्या कर्मकारी न भवति। एतदेव मद्वचनस्य रहस्यम्" इति। एतत् श्रुतवतीनां गोपीनां महान् विस्मयः जातः।

*बहुषु गृहेषु 'ब्रह्मार्पणं .... ' श्लोकः भोजनात् पूर्वम् उच्यते। मनुष्येण सर्वं कार्यं ब्रह्मबुद्ध्या एव करणीयम्। तदा एव तत् यज्ञस्वरूपं भवति। भोजनम् अपि यज्ञकार्यम्, तदपि ब्रह्मबुद्ध्या एव करणीयम् यथा कथायां महामुनिः व्यासः बोधितवान्।*

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ ४-२४ ॥**

अन्वयः – अर्पणं ब्रह्म , ब्रह्माग्नौ ब्रह्मणा हुतं हविः ब्रह्म, ब्रह्मकर्मसमाधिना तेन गन्तव्यम् (अपि) ब्रह्मैव।

तात्पर्यार्थः –

अत्र यदस्ति प्रदानं तत् ब्रह्म, यत् प्रदीयते आज्यादिकं तदपि ब्रह्म, यत्र प्रदीयते सः अग्निः अपि ब्रह्म, येन प्रदीयते सः यजमानोऽपि ब्रह्म, सर्वापि क्रिया ब्रह्म इति यो विश्वसिति तादृशेन यजमानेन प्राप्तव्यमपि ब्रह्मैव। सर्वं खल्विदं ब्रह्म इति तात्पर्यम्।

९. १. एकपदेन उत्तरयत – (मौखिकाभ्यासार्थम् )

१. कः यमुनानद्याः अन्यत् तीरं गन्तुम् इष्टवान् ?
२. यमुनानद्याः तीरे सः कस्याः प्रतीक्षां कुर्वन् आसीत् ?
३. दुग्धं नवनीतं च गृहीत्वा तत्र काः आगताः ?
४. सूर्ये अस्तं गते अपि का न आगता ?
५. गोप्यः व्यासाय किं दत्तवत्यः ?
६. किं व्यासः गोपीभिः दत्तं खाद्यं खादितवान् ?
७. "हे यमुने ! यदि मया किमपि न खादितं तर्हि तेन महिम्ना भवती नदीजलस्य तथा विभागं करोतु येन वयं सुखेन अन्यत् तीरं गन्तुं शक्नुयाम" इति यमुनानद्याः प्रार्थनां कः कृतवान् ?
८. किं यमुनानदी व्यासे विश्वसितवती ?
९. किं यमुनानदी विभक्ता ?
१०. व्यासः सर्वाणि कार्याणि कया बुद्ध्या करोति ?

९. २. एतस्मिन् पाठे सत्सप्तमीविभक्तिसहितानि रूपाणि स्थूलाक्षरैः मुद्रितानि सन्ति । तैः एतानि रिक्तस्थानानि पूरयत –

________________ ________________ ________________

________________ ________________ ________________

________________ ________________ ________________

एतत् वाक्यं परिशीलयत –

**अध्यापके कक्ष्यां प्रविष्टे छात्राः उत्थितवन्तः ।**

यदा अध्यापकः **कक्ष्यां** प्रविष्टवान् तदा छात्राः उत्थितवन्तः इत्यर्थः । अत्र द्वे क्रिये स्तः – अध्यापकस्य प्रवेशः छात्राणाम् उत्थानं च इति । छात्राणाम् उत्थानं कदा भवति ? इति जिज्ञासायाम् अध्यापकस्य प्रवेशः यदा भवति तदा इति ज्ञायते । अध्यापकस्य प्रवेशक्रिया छात्राणाम् उत्थानक्रियायाः कालं ज्ञापयति इत्यर्थः । ततश्च कालविषये अध्यापकस्य प्रवेशः ज्ञापकक्रिया, छात्राणाम् उत्थानं ज्ञाप्यक्रिया । एतादृशे प्रसङ्गे ज्ञापकक्रियायाः आश्रयस्य सप्तमीविभक्तिः भवति । एषा सतिसप्तमी इति उच्यते । भावसप्तमी इत्यपि अस्याः व्यवहारः अस्ति । पूर्वस्मिन् उदाहरणे कालज्ञापकक्रियायाः आश्रयः 'अध्यापकः' । अतः 'अध्यापक'शब्दात् सप्तमीविभक्तिः । 'प्रविष्टे' इति तु 'अध्यापके' इत्यस्य विशेषणम् इति ततोऽपि सप्तमीविभक्तिः ।

सप्तमीविभक्त्यन्तशब्दस्य प्रयोगे यदि शब्दः पुंलिङ्गः नपुंसकलिङ्गः वा तर्हि 'सति' इति शब्दस्य प्रयोगः, यथा – अध्यापके प्रविष्टे सति ..... । यथा च मित्रे आगते सति...... । यदि पुनः स्त्रीलिङ्गः तर्हि 'सती' इति प्रयोगः । यथा – गीतायां प्रविष्टायां सत्यां ....... । अत एव इयं सतिसप्तमीति सती सप्तमीति वा उच्यते ।

यथा – काले सन्निहिते सति सर्वं फलति। (पुंलिङ्गे)
याने आगते सति सर्वे अतुष्यन्। (नपुंसकलिङ्गे)
समस्यायाम् उपस्थितायां सत्याम् अस्माभिः धैर्यं नैव त्यक्तव्यम्। (स्त्रीलिङ्गे)

द्विवचने बहुवचने चापि तस्य प्रयोगः भवति।

वाक्येषु 'सति'सप्तमीविभक्तेः प्रयोगार्थं क्तप्रत्ययान्तस्य सप्तमीविभक्तिरूपाणि स्मरत –

क्तप्रत्ययान्तस्य 'आगत'शब्दस्य सप्तमीविभक्तिरूपाणि –

| | | |
|---|---|---|
| आगते | आगतयोः | आगतेषु (पुंलिङ्गे नपुंसकलिङ्गे) |
| आगतायाम् | आगतयोः | आगतासु (स्त्रीलिङ्गे) |

जानीत –

➪ ज्ञापकक्रियायाः आश्रयः कर्ता कर्म वा भवति।

**आदौ तादृशम् एकम् अभ्यासं कुरुत यत्र ज्ञापकक्रियायाः आश्रयः कर्ता अस्ति।**

९. ३. यथोदाहरणम् एतेषु वाक्येषु ज्ञापकक्रिया का इति तस्याः आश्रयभूतः कर्ता कः इति च लिखत –

| वाक्यम् | ज्ञापकक्रिया | क्रियायाः आश्रयः |
|---|---|---|
| यथा – अध्यापके उपविष्टे छात्राः उपविष्टवन्तः। | **अध्यापकस्य उपवेशनम्** | **अध्यापकः** |
| १. पुष्पेषु विकसितेषु भ्रमराः आगताः। | ________ | ________ |
| २. भोजने समाप्ते पिता कार्यालयं गतवान्। | ________ | ________ |
| ३. द्रव्ये नष्टे धनिकः दुःखी अभवत्। | ________ | ________ |
| ४. पितरि कार्यालयं गते माता भोजनं कृतवती। | ________ | ________ |
| ५. अग्रजायां गृहम् आगतायां सर्वे सन्तुष्टाः। | ________ | ________ |

९. ४. यथोदाहरणं वाक्यद्वयम् एकस्मिन् वाक्ये लिखत –

यथा – शिक्षकः आगतः। छात्राः तूष्णीम् अभवन्।
शिक्षके आगते सति छात्राः तूष्णीम् अभवन्।

१. प्रातःकालः जातः। माता उत्थितवती।

________________________________________।

२. भोजनं समाप्तम्। पिता कार्यालयं गतवान्।

________________________________________।

३. स्नेहिताः गताः। अहं भोजनं कृतवान्।

________________________________________।

४. सख्यौ आगते । अनुजा क्रीडितुं गतवती ।

______________________________________________।

५. परीक्षा सन्निहिता । छात्राः पठने निरताः अभवन् ।

______________________________________________।

६. माता अस्वस्था जाता । पिता पाकम् अकरोत् ।

______________________________________________।

७. अवसरः प्राप्तः । सखी मह्यं दूरभाषां कृतवती ।

______________________________________________।

८. द्रव्यं नष्टम् । धनिकः दुःखी अभवत् ।

______________________________________________।

९. वृक्ष पतितः । वाहनानि स्थगितानि ।

______________________________________________।

१०. श्रीरामः वनं गतः । दशरथः प्राणान् त्यक्तवान् ।

______________________________________________।

**इदानीं यत्र ज्ञापकक्रियायाः आश्रयः कर्म अस्ति तादृशानि उदाहरणानि पश्यत –**

**शिक्षकेण श्लोके पाठिते (सति) छात्राः तस्य अर्थं लिखितवन्तः ।**

यदा शिक्षकेण श्लोकः पाठितः तदा छात्राः तस्य अर्थं लिखितवन्तः इत्यर्थः । अत्र द्वे क्रिये स्तः । के ते क्रिये ? पाठनक्रिया लेखनक्रिया च । शिक्षकस्य पाठनं ज्ञापकक्रिया, छात्राणां लेखनं ज्ञाप्यक्रिया । एवं च अत्र कालविषये तयोः क्रिययोः ज्ञाप्यज्ञापकभावः अस्ति । तत्र ज्ञापकक्रियायाः आश्रयः श्लोकः । अतः 'श्लोक'शब्दात् सप्तमीविभक्तिः । 'पाठिते' इत्यत्र तु 'श्लोक'शब्दस्य विशेषणत्वात् सप्तमी ।

९. ५. यथोदाहरणं ज्ञापकक्रिया का इति तस्याः आश्रयः कः इति च लिखत –

| वाक्यम् | ज्ञापकक्रिया | क्रियाश्रयः(कर्म) |
|---|---|---|
| यथा – अध्यापकेन प्रश्ने कृते छात्रा उत्तरम् उक्तवती । | करणम् | प्रश्नः |
| १. भिक्षुकेण अन्ने प्राप्ते भोजनं कृतम् । | __________ | __________ |
| २. मधुरे गीते श्रुते बालकाः सन्तुष्टाः | __________ | __________ |
| ३. मात्रा कथायां श्रावितायां पुत्री सुप्ता । | __________ | __________ |
| ४. मया पुस्तके पठिते विषयः ज्ञातः । | __________ | __________ |
| ५. अग्रजया फलेषु खादितेषु माता सन्तुष्टा । | __________ | __________ |

९. ६. यथोदाहरणं वाक्यद्वयम् एकं वाक्यं कुरुत –

यथा – यदा मार्जालः दृष्टः तदा शुनकेन भषितम् ।
मार्जाले दृष्टे सति शुनकेन भषितम् ।

१. यदा भीष्मस्य शङ्खनादः श्रुतः तदा अर्जुनः चिन्ताकुलः जातः ।
______________________________________________।

२. यदा अवसरः प्राप्तः तदा सा दूरभाषां कृतवती ।
______________________________________________।

३. यदा सखीभिः पद्यं गीतं तदा सा नृत्तवती ।
______________________________________________।

४. यदा जनैः चोराः गृहीताः तदा आरक्षकाः आगताः ।
______________________________________________।

५. यदा मात्रा पितृवचनं स्मारितं तदा अग्रजः आपणं गतवान् ।
______________________________________________।

एतेषु अभ्यासेषु ज्ञापकक्रियायाः क्तप्रत्ययान्तेन शब्देन प्रतिपादनं वर्तते ।

अधस्तनवाक्येषु ज्ञापकक्रियायाः क्तवतुप्रत्ययान्तेन शब्देन प्रतिपादनं भवति ।

यथा – गोपाले **गतवति** अनुजा तस्य प्रकोष्ठं प्रविष्टवती ।
गोपालः गतवान् । अनुजा तस्य प्रकोष्ठं प्रविष्टवती इत्यर्थः ।

वाक्येषु सतिसप्तमीविभक्तेः प्रयोगार्थं क्तवतुप्रत्ययान्तस्य सप्तमीविभक्तिरूपाणि स्मरत –

क्तवतुप्रत्ययान्तस्य 'गतवत्'शब्दस्य सप्तमीविभक्तिरूपाणि –

| | | |
|---|---|---|
| गतवति | गतवतोः | गतवत्सु (पुंलिङ्गे नपुंसकलिङ्गे) |
| गतवत्याम् | गतवत्योः | गतवतीषु (स्त्रीलिङ्गे) |

९. ७. यथोदाहरणं क्तवतुप्रत्ययान्तं प्रयुज्य सतिसप्तमीवाक्यानि लिखत –

यथा – यदा पिता गतवान् तदा शिशुः रुदितवान् ।
पितरि गतवति शिशुः रुदितवान् ।

१. यदा नृपः सूचितवान् तदा सैनिकाः धावितवन्तः ।
______________________________________________।

२. यदा गुरुः आहूतवान् तदा शिष्याः आगतवन्तः ।
______________________________________________।

३. यदा नेता आगतवान् तदा जनाः करताडनं कृतवन्तः ।

______________________________________________।

४. यदा वृक्षः पतितवान् तदा वाहनानि स्थगितानि ।

______________________________________________।

५. यदा माता आगतवती तदा वयं भोजनं कृतवन्तः ।

______________________________________________।

६. यदा बालकौ क्रीडितवन्तौ तदा माता वार्तापत्रिकां पठितवती ।

______________________________________________।

७. यदा शिक्षिका पाठितवती तदा छात्रः विषयम् अवगतवान् ।

______________________________________________।

८. यदा धनिकः विज्ञापिकां दृष्टवान् तदा सुहृत् आगतवान् ।

______________________________________________।

९. यदा गायिका पद्यं गीतवती तदा बालकौ वाद्यं वादितवन्तौ ।

______________________________________________।

१०. यदा मित्राणि आगतवन्ति तदा वयं चलनचित्रं दृष्टवन्तः।

______________________________________________।

अधस्तनवाक्येषु ज्ञापकक्रियायाः शतृशानच्-प्रत्ययान्तशब्देन प्रतिपादनं वर्तते । सावधानं पठत -

यथा - यदा प्रदीपः चलनचित्रं **पश्यन्** आसीत् तदा विद्युत् गता ।
प्रदीपे चलनचित्रं **पश्यति** सति विद्युत् गता ।
वृक्षः **कम्पमानः** अस्ति । वानराः तत्र क्रीडन्ति ।
वृक्षे **कम्पमाने** सति वानराः तत्र क्रीडन्ति ।

स्मरत -

- शतृप्रत्ययान्तस्य 'गच्छत्'शब्दस्य सप्तमीविभक्तिरूपाणि -

| | | |
|---|---|---|
| गच्छति | गच्छतोः | गच्छत्सु (पुंलिङ्गे नपुंसकलिङ्गे) |
| गच्छन्त्याम् | गच्छन्त्योः | गच्छन्तीषु (स्त्रीलिङ्गे) |

- शानजन्तरूपाणि तु सरलानि ।

९. ८. यथोदाहरणं शतृशानच्-प्रत्ययान्तं प्रयुज्य वाक्यानि लिखत -

यथा - यदा गोपालः गच्छन् आसीत् तदा अनुजा तस्य प्रकोष्ठं गतवती ।
गोपाले गच्छति अनुजा तस्य प्रकोष्ठं गतवती ।

१. यदा शिक्षकः वदन् आसीत् तदा छात्राः श्रुतवन्तः ।

________________________________________।

२. यदा दिलीपः स्नानं कुर्वन् आसीत् तदा जलागमनं स्थगितम् ।

________________________________________।

३. यदा पौत्रादयः क्रीडन्तः आसन् तदा मातामही सन्तुष्टा अभवत् ।

________________________________________।

४. यदा चन्द्रः उदयमानः भवति तदा कुमुदं विकसति ।

________________________________________।

५. यदा अग्रजा पठन्ती भवति तदा अहं क्रीडामि ।

________________________________________।

६. यदा यूयं चलनचित्रं पश्यन्तः भवथ तदा अहं निद्रां करोमि ।

________________________________________।

७. यदा वृक्षः कम्पमानः भवति तदा पर्णानि पतन्ति ।

________________________________________।

८. यदा अहं गृहे अधीयानः भवामि तदा बालाः तूष्णीं भवन्ति ।

________________________________________।

९. यदा लक्ष्मीनारायणः फलं भुञ्जानः भवति तदा तस्य मित्रम् आगच्छति ।

________________________________________।

१०. अग्रजः देवं वन्दमानः अस्ति । अनुजः अनुकरोति ।

________________________________________।

९. ९. आदिशङ्कराचार्याणां 'भज गोविन्दम्' इति स्तोत्रात् स्वीकृतानि एतानि पद्यानि गायत ।

सतिसप्तमीयुक्तान् शब्दान् संगृह्णीत -

भज गोविन्दं भज गोविन्दं गोविन्दं भज मूढमते । ____________
सम्प्राप्ते सन्निहिते काले नहि नहि रक्षति डुकृञ्करणे ॥ ____________

॥ भज गोविन्दम् ॥

वयसि गते कः कामविकारः शुष्के नीरे कः कासारः । ______
क्षीणे वित्ते कः परिवारः ज्ञाते तत्त्वे कः संसारः ॥ ______
॥ भज गोविन्दम् ॥

यावद्वित्तोपार्जनसक्तः तावन्निजपरिवारो रक्तः । ______
पश्चात् जीवति जर्जरदेहे वार्तां कोऽपि न पृच्छति गेहे ॥ ______
॥ भज गोविन्दम् ॥ ______

यावत्पवनो निवसति देहे तावत्पृच्छति कुशलं गेहे । ______
गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन् काये ॥ ______
॥ भज गोविन्दम् ॥

९. १०. एतान् गीताश्लोकान् उच्चैः पठत, सप्तम्यन्तपदानि च अत्र लिखत –

१-२० ______ ९.२१ ______
१-४० ______ १४.१२ ______
१-४१ ______ १४.१३ ______
२-२० ______ १४.१४ ______
८-२० ______

अधस्तनानां क्तप्रत्ययान्तघटितानां वाक्यानाम् अर्थं जानीत –

| | |
|---|---|
| प्रवृत्ते शस्त्रसम्पाते (१-२०) | यदा शस्त्रसम्पातः प्रवृत्तः तदा पाण्डवः हृषीकेशम् इदं वाक्यम् आह । |
| धर्मे नष्टे (१-४०) | यदा धर्मः नष्टः तदा अधर्मः सर्वं कुलम् अभिभवति । |
| स्त्रीषु दुष्टासु वार्ष्णेय (१-४१) | यदा स्त्रियः कलुषिताः भवन्ति तदा वर्णसङ्करः जायते । |
| न हन्यते हन्यमाने शरीरे (२-२०) | यदा शरीरं हन्यते तदा आत्मा न हन्यते । |
| सर्वेषु भूतेषु नश्यत्सु (८-२०) | यदा सर्वाणि अपि भूतानि नश्यन्ति तदा एषः न विनश्यति । |
| क्षीणे पुण्ये मर्त्यलोकं विशन्ति (९-२१) | यदा पुण्यं क्षीयते तदा (ते) मर्त्यलोकं विशन्ति । |
| रजस्येतानि जायन्ते विवृद्धे (१४-१२) | यदा रजः विवृद्धं भवति तदा एतानि जायन्ते । |
| तमस्येतानि जायन्ते विवृद्धे (१४-१३) | यदा तमः विवृद्धं भवति तदा एतानि जायन्ते । |
| यदा सत्त्वे प्रवृद्धे (१४-१४) | यदा सत्त्वं प्रवृद्धं तदा देहभृत् उत्तमविदाम् अमलान् लोकान् प्रतिपद्यते । |

# १०. ततो दुःखतरं नु किम् ?

तरप् - तमप्

एतान् गीताश्लोकान् पठत -

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥२.३४॥

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥२.३५॥

अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो **दुःखतरं** नु किम् ॥२.३६ ॥

भगवद्गीता ज्ञानदीपिका इति कथ्यते । तत्र भगवान् श्रीकृष्णः अर्जुनम् उद्दिश्य एवं वदति - ''हे अर्जुन ! इदानीं क्षत्रियस्य ते युद्धं परमो धर्मः । तस्य अकरणे तव महती अपकीर्तिः सम्भवति । ईदृशी अपकीर्तिः मरणमपि अतिशेते । यदि युद्धं न करोषि तर्हि ये अद्य तव सम्मानं कुर्वन्ति ते एव वदिष्यन्ति यत् त्वं रणात् भीत्या पलायितः इति । शत्रवः अपि तव सामर्थ्यं निन्दन्तः दुर्वचनानि कथयिष्यन्ति । तस्मात् दुःखतरम् अन्यत् किम् अस्ति ?'' इति ।

ततोऽपि दुःखतरं किमपि नास्ति इति अर्थः । अत्र जीवने अपकीर्तिः, मित्रैः अवमानः, शत्रुभिः निन्दनम् इत्येतदपेक्षया अधिकं दुःखं नास्ति एव इति वक्तुं **'दुःखतरम्'** इति शब्दस्य प्रयोगः कृतः अस्ति ।

एतं श्लोकं पठत -

इति **गुह्यतमं** शास्त्रमिदमुक्तं मयानघ ।
एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥१५.२०॥

हे अनघ ! इदं **गुह्यतमं** शास्त्रम् इति मया उक्तम् । हे भारत ! एतत् बुद्ध्वा बुद्धिमान् मनुष्यः कृतार्थः भवेत् ।

एतस्मिन् श्लोके 'एतत् शास्त्रं सर्वेषु शास्त्रेषु अत्यन्तं रहस्यमयम्, एतत् ज्ञानं सुलभतया प्राप्तुं न शक्यम्' इत्यभिप्रायं प्रतिपादयितुं **'गुह्यतमम्'** इति शब्दस्य प्रयोगः कृतः अस्ति ।

**दुःखतरम् इति तरप्प्रत्ययान्तं रूपम् । गुह्यतमम् इति तमप्प्रत्ययान्तं रूपम् ।** अधुना वयं तरप्-तमप्-प्रत्यययोः परिचयं प्राप्नवाम -

जानीत -

'तरप्-तमप्'प्रत्ययौ अतिशयार्थं दर्शयतः । द्वयोः एकस्मिन् अतिशयं दर्शयितुं 'तरप्'प्रत्ययस्य प्रयोगः क्रियते । बहूनाम् एकस्मिन् अतिशयं दर्शयितुं 'तमप्'प्रत्ययस्य प्रयोगः क्रियते । एतौ प्रत्ययौ प्रातिपदिकस्य अन्ते योज्येते ।

| | **प्रातिपदिकम्** | **'तरप्'प्रत्ययान्तम्** | **'तमप्'प्रत्ययान्तम्** |
|---|---|---|---|
| यथा- | उन्नत | उन्नततर | उन्नततम |
| | प्राचीन | प्राचीनतर | प्राचीनतम |
| | सुन्दर | सुन्दरतर | सुन्दरतम |
| | स्थूल | स्थूलतर | स्थूलतम |
| | विशाल | विशालतर | विशालतम |
| | कृश | कृशतर | कृशतम |

| | | |
|---|---|---|
| दीर्घ | दीर्घतर | दीर्घतम |
| विरल | विरलतर | विरलतम |

उन्नतशब्दस्य त्रिषु लिङ्गेषु रूपाणि इमानि –

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|
| उन्नतः | उन्नतौ | उन्नताः (पुंलिङ्गे) |
| उन्नता | उन्नते | उन्नताः (स्त्रीलिङ्गे) |
| उन्नतम् | उन्नते | उन्नतानि (नपुंसकलिङ्गे) |

उन्नततरशब्दस्य त्रिषु लिङ्गेषु रूपाणि इमानि –

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|
| उन्नततरः | उन्नततरौ | उन्नततराः (पुंलिङ्गे ) |
| उन्नततरा | उन्नततरे | उन्नततराः (स्त्रीलिङ्गे) |
| उन्नततरम् | उन्नततरे | उन्नततराणि (नपुंसकलिङ्गे) |

उन्नततमशब्दस्य अपि त्रिषु लिङ्गेषु रूपाणि उन्नततरशब्दस्य इव इति ज्ञेयम् ।

एतानि उदाहरणानि परिशीलयत –

अस्माकं प्राङ्गणे उन्नताः वृक्षाः सन्ति । तेषु आम्रतिन्त्रिणीनारिकेलवृक्षाः **उन्नततमाः** ।

आम्रतिन्त्रिणीवृक्षयोः तिन्त्रिणीवृक्षः **उन्नततरः** । (द्वौ स्तः, अतः 'तर'प्रयोगः)

आम्रतिन्त्रिणीनारिकेलवृक्षेषु नारिकेलवृक्षः **उन्नततमः** । (त्रयः सन्ति, अतः 'तम'प्रयोगः)

जानीत –

तरप्–तमप्प्रत्ययौ अतिशयार्थं दर्शयतः । अतः तदन्तः शब्दः विशेषणं भवति । सः विशेषणविशेष्यनियमवशात् विशेष्यस्य लिङ्गं वचनं विभक्तिं च अनुसरति ।

उदा. लिङ्गं वचनं च यथा –

पर्वतेषु हिमालयः **उन्नततमः** अस्ति । (पुंलिङ्गम् एकवचनं च)

नदीषु गङ्गा **पवित्रतमा** अस्ति । (स्त्रीलिङ्गम् एकवचनं च)

काव्येषु रामायणं **प्राचीनतमम्** अस्ति । (नपुंसकलिङ्गम् एकवचनं च)

खगेषु पिककाकौ **कृष्णतमौ** । (पुंलिङ्गं द्विवचनं च, बहुषु द्वौ, अतः 'तम'प्रयोगः)

नदीषु गङ्गायमुने **पवित्रतमे** स्तः । (स्त्रीलिङ्गं द्विवचनं च, बह्वीषु द्वे, अतः 'तम'प्रयोगः)

काव्येषु रामायणं महाभारतं च **प्रसिद्धतमे** काव्ये स्तः । (नपुंसकलिङ्गं द्विवचनं च, बहुषु द्वे, अतः 'तम'प्रयोगः)

प्राणिषु गजाः **स्थूलतमाः** । (पुंलिङ्गं बहुवचनं च, बहुषु बहवः, अतः 'तम'प्रयोगः)

जनेषु बालिकाः **चतुरतमाः** । (स्त्रीलिङ्गं बहुवचनं च, बह्वीषु बह्व्यः, अतः 'तम'प्रयोगः)

पद्येषु सुभाषितानि **मधुरतमानि** । (नपुंसकलिङ्गं बहुवचनं च, बहुषु बहूनि अतः 'तम'प्रयोगः)

१०. १. यथोदाहरणम् आवरणात् उचितं पदं चित्वा रिक्तस्थानानि पूरयत –

यथा – अजगजयोः अजः **कृशतरः** । (कृशतरः, कृशतमः)

१. नारीषु शकुन्तला ———————— । (सुन्दरतरा, सुन्दरतमा)

२. पाण्डवेषु युधिष्ठिरः ———————— । (गुणवत्तमः, गुणवत्तरः)

३. काकमयूरयोः काकस्य स्वरः ———————— । (कर्कशतरः, कर्कशतमः)

४. ग्रहेषु मङ्गलः भूमेः ———————— । (समीपतरः, समीपतमः)

५. सिंहव्याघ्रचित्रकेषु व्याघ्रः ———————— । (क्रूरतरः, क्रूरतमः)

६. आफ्रिकामेरिकाराष्ट्रयोः अमेरिकाराष्ट्रं भारतदेशात् ———————— । (दूरतरम्, दूरतमम्)

७. खगेषु पिकस्य स्वरः ———————— । (मधुरतरः, मधुरतमः)

८. गान्धि–अरविन्दमार्गयोः गान्धिमार्गः ———————— । (दीर्घतरः, दीर्घतमः)

९. जनेषु गुणी गुणरागी च जनः ———————— । (विरलतरः, विरलतमः)

१०. जनेषु उत्तमः वक्ता ————————, दाता पुनः ———————— । (विरलतरः, विरलतमः)

**'तरप्–तमप्' प्रत्ययौ बलवत्, गुणवत् , बुद्धिमत् – इत्यादीनाम् अन्ते अपि प्रयुज्येते ।**

| | प्रातिपदिकम् | तरप् प्रत्ययान्तम् | तमप् प्रत्ययान्तम् |
|---|---|---|---|
| यथा – | बलवत् | बलवत्तर | बलवत्तम |
| | गुणवत् | गुणवत्तर | गुणवत्तम |
| | रूपवत् | रूपवत्तर | रूपवत्तम |
| | धनवत् | धनवत्तर | धनवत्तम |
| | बुद्धिमत् | बुद्धिमत्तर | बुद्धिमत्तम |
| | श्रीमत् | श्रीमत्तर | श्रीमत्तम |
| | धीमत् | धीमत्तर | धीमत्तम |
| | शक्तिमत् | शक्तिमत्तर | शक्तिमत्तम |

स्मरत –

बलवत्–शब्दस्य रूपाणि –

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| बलवान् | बलवन्तौ | बलवन्तः (पुंलिङ्गे) |
| बलवती | बलवत्यौ | बलवत्यः (स्त्रीलिङ्गे) |
| बलवत् | बलवती | बलवन्ति (नपुंसकलिङ्गे) |

बुद्धिमत्-शब्दस्य रूपाणि -

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| बुद्धिमान् | बुद्धिमन्तौ | बुद्धिमन्तः (पुंलिङ्गे) |
| बुद्धिमती | बुद्धिमत्यौ | बुद्धिमत्यः (स्त्रीलिङ्गे) |
| बुद्धिमत् | बुद्धिमती | बुद्धिमन्ति (नपुंसकलिङ्गे) |

एतानि उदाहरणानि परिशीलयत -

पाण्डवाः बलवन्तः। तेषु भीमार्जुनौ बलवत्तमौ।
भीमार्जुनयोः भीमः बलवत्तरः।
पञ्चसु पाण्डवेषु भीमः बलवत्तमः।

१०. २. आवरणात् उचितं पदं चित्वा रिक्तस्थानं पूरयत -

१. गीताललतयोः का ________ ? (बुद्धिमत्तरा, बुद्धिमत्तमा)
२. सर्वेषु भारती ________। (बुद्धिमत्तरा, बुद्धिमत्तमा)
३. सर्वेषु ग्रन्थेषु गीता ________। (गुणवत्तरा, गुणवत्तमा)
४. सर्वेषु छात्रेषु निखिलः ________। (शक्तिमत्तरः, शक्तिमत्तमः)
५. शक्तियुक्त्योः मध्ये युक्तिः ________। (बलवत्तरा, बलवत्तमा)
७. कर्म दैवं च बलवती। तयोः किं ________ ?(बलवत्तरम्, बलवत्तमम्)

एतां लघुकथां पठत -

कदाचित् अङ्गुलीनां परस्परं कलहः सम्पन्नः। अङ्गुष्ठः, तर्जनी, मध्यमा, अनामिका कनिष्ठिका च कलहं कुर्वन्ति, अहमहमिकया च वदन्ति - "अहं राजा, अहं राजा, अहं श्रेष्ठः, अहं श्रेष्ठः" इति। अन्ततः निर्णयार्थं ताः सर्वाः न्यायालयं गच्छन्ति। न्यायाधीशस्य पुरतः स्वपक्षम् उपस्थापयन्ति।

आदौ अङ्गुष्ठः वदति - "अहम् अङ्गुष्ठः। अहं बलवत्तमः। अहं दृढतमः। अतः अहमेव राजा।" ततः तर्जनी वदति - "अहं तर्जनी। अहं सर्वान् तर्जयामि। अहं सर्वं सूचयामि। अतः अहमेव राज्ञी।" तत्पश्चात् मध्यमा वदति - "अहं मध्यमा। अहं दीर्घतमा। अतः अहमेव राज्ञी।" ततः अनामिका अग्रे आगत्य वदति - "अहम् अनामिका। सर्वासु अहमेव धनिकतमा। यतः अहं बहुरत्नखचितं कनकमयम् अङ्गुलीयकं धरामि। अतः अहमेव राज्ञी" इति।

अन्ते कनिष्ठिका मन्दम् उत्तिष्ठति। अग्रे आगत्य वदति च - "अहम् अङ्गुष्ठः इव न बलवती। तर्जनी इव अहं कमपि तर्जयितुं न शक्नोमि। मध्यमा इव अहं न दीर्घतमा, परं लघुतमा। नाहम् अनामिका इव धनिका अपि। यतः अङ्गुलीयकं न धरामि। एवं सत्यपि मया किञ्चन सौभाग्यं तु प्राप्तमस्ति। यदा पूजनीयाः आगच्छन्ति तदा जनाः तान् साञ्जलिबन्धं नमस्कुर्वन्ति। तदा तु अहमेव अग्रे भवामि। पूजनीयानां च तेषां दर्शनम् आदौ अहमेव प्राप्नोमि" इति।

सर्वासां वादं श्रुत्वा न्यायाधीशः निर्णयं श्रावयति यत् कनिष्ठिका एव अङ्गुलीनां राज्ञी इति।

१०. ३. अधोलिखितप्रश्नानां पूर्णेन वाक्येन उत्तरं लिखत –

१. अङ्गुलीनां नामानि कानि ? ________________________________।

२. तासु का दीर्घतमा ? ________________________________।

३. मध्यमातर्जन्योः का दीर्घतरा ? ________________________________।

४. अनामिकामध्यमयोः का लघुतरा ? ________________________________।

५. अङ्गुलीषु लघुतमा का ? ________________________________।

६. अङ्गुलीषु बलवत्तमः कः ? ________________________________।

७. अङ्गुलीषु धनिकतमा का ? ________________________________।

८. न्यायाधीशस्य निर्णयः कः ? ________________________________।

९. किं न्यायाधीशस्य निर्णयः उचितः ? ________________________________।

१०. एषा कथा बलम्, अधिकारः, रूपम्, धनम्, सत्सङ्गः – एतेषु किं महत्तमम् इति बोधयति ?

________________________________।

(ख ) एतान् गीताश्लोकान् पठत –

अर्जुन उवाच –

**ज्यायसी** चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥३.१॥
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन **श्रेयो**ऽहमाप्नुयाम् ॥३.२॥

श्रीभगवानुवाच –

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥३.३॥
नियतं कुरु कर्म त्वं कर्म **ज्यायो** ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥३.८॥

भगवान् श्रीकृष्णः अर्जुनम् उद्दिश्य कर्मणः महत्त्वं विवृणोति। ततः बुद्धेः महत्त्वमपि वर्णयति। तदा अर्जुनः भ्रान्तः भवति। सः निश्चिततया ज्ञातुम् इच्छति यत् बुद्धिकर्मणोः का **ज्यायसी** (प्रशस्यतरा) इति।

द्वयोः का **प्रशस्यतरा** इति प्रष्टुं 'ज्यायसी' इति शब्दस्य प्रयोगः अत्र कृतः अस्ति।

भगवान् समाधानं वदति – ''कर्ममार्गः ज्ञानमार्गः च इति द्वौ मार्गौ। तत्र ज्ञानिनां ज्ञानमार्गः उचितः, इतरेषां कर्ममार्गः एव **श्रेयान्**। कोऽपि कर्म अकुर्वन् क्षणमपि स्थातुं न शक्नोति। अतः सर्वथा नियतं कर्म कर्तव्यमेव। तस्मात् कर्म-अकर्मणोः कर्म एव **ज्यायः**'' इति।

अत्र स्थूलाक्षरैः मुद्रितानि पदानि परिशीलयत –

एतेषु पदेषु 'ईयसुन्-इष्ठन्'प्रत्यययोः प्रयोगः दृश्यते।

जानीत –

'ईयसुन्-इष्ठन्'प्रत्ययौ अपि 'तरप्-तमप्'प्रत्ययौ इव अतिशयार्थं बोधयतः। द्वयोः एकस्मिन् अतिशयं बोधयितुं 'ईयसुन्'प्रत्ययस्य प्रयोगः क्रियते। बहूनाम् एकस्मिन् अतिशयं बोधयितुं 'इष्ठन्'प्रत्ययस्य प्रयोगः क्रियते। एतौ प्रत्ययौ प्रातिपदिकस्य अन्ते योज्येते।

| | प्रातिपदिकम् | ईयसुन्प्रत्ययान्तम् | इष्ठन्प्रत्ययान्तम् |
|---|---|---|---|
| यथा – | **बलिन्** | **बलीयस्** | **बलिष्ठ** |
| | गुरु | गरीयस् | गरिष्ठ |
| | वृद्ध | ज्यायस् | ज्येष्ठ |
| | युवन् | यवीयस् | यविष्ठ |
| | युवन् | कनीयस् | कनिष्ठ |
| | उरु | वरीयस् | वरिष्ठ |
| | प्रशस्य | श्रेयस् / ज्यायस् | श्रेष्ठ / ज्येष्ठ |
| | प्रिय | प्रेयस् | प्रेष्ठ |

जानीत –

ईयसुन्प्रत्ययान्तशब्दस्य प्रथमाविभक्त्यन्तरूपाणि इमानि भवन्ति –

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| ज्यायान् | ज्यायांसौ | ज्यायांसः (पुंलिङ्गे) |
| ज्यायसी | ज्यायस्यौ | ज्यायस्यः (स्त्रीलिङ्गे) |
| ज्यायः | ज्यायसी | ज्यायांसि (नपुंसकलिङ्गे) |

१०. ४. अधः प्रतिगणं त्रीणि वाक्यानि सन्ति। तानि परिशीलयत। ततः अन्ते स्थितानां प्रश्नानाम् उत्तराणि लिखत –

(क) **१. रामलक्ष्मणयोः रामः ज्यायान्।**

**२. रामभरतलक्ष्मणशत्रुघ्नेषु रामभरतौ ज्यायांसौ।**

**३. रामभरतलक्ष्मणशत्रुघ्नेषु रामभरतलक्ष्मणाः ज्यायांसः।**

१. रामभरतलक्ष्मणशत्रुघ्नेषु कः ज्येष्ठः ?

______________________________।

२. रामभरतलक्ष्मणशत्रुघ्नेषु कः कनिष्ठः?

______________________________।

३. रामलक्ष्मणयोः कः कनीयान् ?

_______________________________________________ ।

४. रामभरतलक्ष्मणशत्रुघ्नेषु कौ कनीयांसौ ?

_______________________________________________ ।

(ख) **१. सीता-उर्मिलयोः सीता ज्यायसी ।**
**२. सीतामाण्डवी-उर्मिलाश्रुतकीर्तिषु सीतामाण्डव्यौ ज्यायस्यौ ।**
**३. सीतामाण्डवी-उर्मिलाश्रुतकीर्तिषु सीतामाण्डवी-उर्मिलाः ज्यायस्यः ।**

१. सीतामाण्डवी-उर्मिलाश्रुतकीर्तिषु का ज्येष्ठा ?

_______________________________________________ ।

२. सीतामाण्डवी-उर्मिलाश्रुतकीर्तिषु का कनिष्ठा ?

_______________________________________________ ।

३. सीता-उर्मिलयोः का कनीयसी ?

_______________________________________________ ।

४. सीतामाण्डवी-उर्मिलाश्रुतकीर्तिषु काः कनीयस्यः ?

_______________________________________________ ।

(ग) **१. रामायणमहाभारतकाव्ययोः महाभारतं वरीयः (विस्तृतम्) ।**
**२. सर्वेषु काव्येषु रामायणमहाभारतकाव्ये वरीयसी ।**

१. सर्वेषु काव्येषु किं काव्यं वरिष्ठम् ?

_______________________________________________ ।

२. सर्वेषु काव्येषु के काव्ये वरीयसी ?

_______________________________________________ ।

१०. ५. एतत्संख्याकेषु गीताश्लोकेषु उपयुक्तानि तरप्-तमप्प्रत्ययान्तानि ईयसुन्-इष्ठन्प्रत्ययान्तरूपाणि वा अन्विष्यत-

२.३६ ३.२१ ३.३५ ६.४२ ७.७ ११.४३

१०. ६. उचितैः तरप्-तमप्प्रत्ययान्तैः ईयसुन्-इष्ठन्प्रत्ययान्तैः वा रिक्तस्थलानि पूरयत -

१. ________ यद्यत् आचरति इतरः जनः तत्तदेव आचरति ।
सः यत् प्रमाणं कुरुते लोकः तत् अनुवर्तते । (३.२१)

२. अहिताः तव सामर्थ्यं निन्दन्तः बहून् अवाच्यवादान् वदिष्यन्ति ।
ततः ____________ किम् अस्ति ? (२.३६)

३. स्वधर्मे निधनं ________ , परधर्मः भयावहः । (३.३५)

४. अथवा धीमतां योगिनां कुले जन्म भवति, ईदृशं जन्म लोके ————— । (६.४२)
५. मत्तः ———— किञ्चित् अन्यत् नास्ति ।
इदं सर्वं सूत्रे मणिगणाः इव मयि प्रोतम् । (७.७)
६. त्वं चराचरस्य अस्य लोकस्य पिता असि, पूज्यः ———— गुरुः असि । (११-४३)

१०. ७. अधः गीताश्लोकानां संख्या दत्ता अस्ति । तान् श्लोकान् उच्चैः पठत –

| | | | |
|---|---|---|---|
| ३.१ | ३.८ | ३.३५ | ४.१५ |
| ४.३६ | ५.१ | ६.४७ | ९.१ |
| १२.९ | १२.५ | १५.२० | १८.६९ |

१. जनार्दन ! बुद्धिः कर्मणः ———— इति ते मतमस्ति चेत् घोरे कर्मणि मां किमर्थं नियोजयसि ? (३.१)
२. त्वं नियतं कर्म कुरु, कर्म अकर्मणः —————, ते शरीरयात्रा अकर्मणः न प्रसिद्ध्येत् । (३.८)
३. स्वनुष्ठितात् परधर्मात् विगुणः स्वधर्मः ————— । (३.३५)
४. तस्मात् मनुष्येषु कश्चित् मे प्रियकृत्तमः न । तस्मात् अन्यः ———— भुवि नास्ति न च भविष्यति ।(१८.६९)
५. सर्वेभ्यः पापेभ्यः ———— अपि असि चेत् सर्वं पापं ज्ञानप्लवेनैव सन्तरिष्यसि । (४.३६)
६. कृष्ण ! कर्मणां संन्यासं पुनः योगं च शंससि, एतयोः यत् ———— तत् सुनिश्चितम् एकं मे ब्रूहि ।(५.१)
७. सर्वेषां योगिनामपि यः मद्गतेन अन्तरात्मना श्रद्धावान् मां भजते सः मे ———— मतः । (६.४७)
८. विज्ञानसहितं ———— ज्ञानं ते प्रवक्ष्यामि यत् ज्ञात्वा अशुभात् मोक्ष्यसे । (९.१)
९. ये भक्ताः एवं सततयुक्ताः त्वां पर्युपासते ते चापि अक्षरमव्यक्तं पर्युपासते तेषां के ———— ?(१२.१)
१०. अव्यक्तचेतसां तेषां क्लेशः ————— । (१२.५)
११. अनघ ! इदं ———— शास्त्रम् इति मया उक्तम् । एतत् बुद्ध्वा बुद्धिमान् कृतकृत्यश्च स्यात् । (१५.२०)
१२. तस्मात् मनुष्येषु कश्चित् मे ————— न । (१८.६९)

जानीत –

'तरप्-तमप्' प्रत्ययौ इव 'डतरच्-डतमच्' इति प्रत्ययौ स्तः । तयोः योजनेन कतर, कतम, अन्यतर, अन्यतम – इति शब्दरूपाणि सिध्यन्ति ।

यथा –

श्रीधरसुकुमारयोः **कतरः** बुद्धिमान् ? (द्वौ स्तः इत्यतः 'डतरच्'प्रयोगः)
श्रीधरः बुद्धिमान् ।
रामभरतलक्ष्मणेषु **कतमः** ज्येष्ठः ? (त्रयः सन्ति इत्यतः 'डतमच्'प्रयोगः)
रामः ज्येष्ठः ।
तयोः **अन्यतरम्** आह्वयतु । (द्वौ स्तः इत्यतः 'डतरच्'प्रयोगः)

तेषु **अन्यतमं** सूचयतु । (बहवः सन्ति इत्यतः 'डतमच्' प्रयोगः)

एतं श्लोकं पठत, डतरच्प्रत्ययान्तम् अन्विष्यत –

*न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।*
*यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ २.६ ॥*

१०. ८. एतां कथां पठत –

प्रियदर्शिनी नाम्नी काचित् **प्रसिद्धतमा** नर्तकी आसीत् । सा अतीव लावण्यवती आसीत् । कदाचित् कश्चन **श्रेष्ठः** चित्रकारः तस्याः नगरम् आगतः । प्रियदर्शिन्या निमन्त्रितः सः तस्याः **विशालतरं** प्रासादं गतवान् । तस्याः प्रार्थनाम् अनुसृत्य तदीयम् अतीव मनोहरं चित्रं लिखितवान् । **सुन्दरतमं** तत् चित्रम् अवलोक्य प्रियदर्शिनी नितरां प्रमुदिता । चित्रकारं प्रशस्य **भूयिष्ठं** धनादिकं दत्त्वा तं च प्रेषितवती ।

विंशतिः वर्षाणि अतीतानि । चित्रकारः पुनः कदाचित् तत् नगरम् आगतवान् । अधुनापि तया **प्रसिद्धतमया** नर्तक्या प्रियदर्शिन्या निमन्त्रितः सः तस्याः **विशालतरं** प्रासादं गतवान्, तस्याः चित्रं लिखितवान् च । परन्तु एतस्मिन् अवसरे चित्रं दृष्ट्वा प्रियदर्शिनी न सन्तुष्टा । सा अवदत् – "भोः महाशय ! किमेतत् ? पूर्वं तु भवान् मम **सुन्दरतमं** चित्रं लिखितवान् आसीत् । पश्यतु, अद्यावधि मया तत् रक्षितम् अस्ति" इति । चित्रकारः तत् चित्रं परिशील्य अवदत् – "क्षम्यतां **श्रेष्ठे** ! यदा तत् चित्रं लिखितवान् तदा अहं युवकः आसम्" इति !

अत्र स्थूलाक्षरैः मुद्रितानि पदानि चित्वा तानि यथोचितं विभागे लिखत –

| तरप् | तमप् | ईयसुन् | इष्ठन् |
|---|---|---|---|
| ________ | ________ | ________ | ________ |
| ________ | ________ | ________ | ________ |
| ________ | ________ | ________ | ________ |

# ११. कोऽयं रामेश्वरः ?

समासः

एतेषु गीतावाक्येषु स्थूलाक्षरैः मुद्रितानि पदानि परिशीलयत –

**मानापमानयो**स्तुल्यस्तुल्यो **मित्रारिपक्षयोः** ।
सर्वारम्भपरित्यागी **गुणातीतः** स उच्यते ॥ (१४.२५)
दृष्ट्वा तु **पाण्डवानीकं व्यूढं दुर्योधनस्तदा**। (१.२)
युयुधानो विराटश्च द्रुपदश्च **महारथः** । (१.४)
पाञ्चजन्यं **हृषीकेशो** देवदत्तं धनञ्जयः । (१.१५)
पौण्ड्रं दध्मौ **महाशङ्खं भीमकर्मा वृकोदरः** । (१.१५)
**श्रद्धाविरहितं** यज्ञं तामसं परिचक्षते । (१७.१३)

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानि पदानि पठित्वा रिक्तस्थानानि पूरयत –

१. मानापमानयोः – मानश्च अपमानश्च – मानापमानौ, तयोः
२. मित्रारिपक्षयोः – मित्रं च अरिश्च – मित्रारी
– मित्रार्योः पक्षौ – मित्रारिपक्षौ, तयोः
३. गुणातीतः – गुणान् अतीतः
४. पाण्डवानीकम् – पाण्डवानाम् अनीकं
५. महान् रथः यस्य सः = ____________
६. हृषीकाणाम् ईशः = ____________
७. भीमं कर्म यस्य सः = ____________
८. वृकस्य उदरम् इव उदरं यस्य सः = ____________
९. श्रद्धया विरहितम् = ____________

एषा समासप्रक्रिया । अधुना वयं समासस्य ज्ञानं प्राप्नवाम –

एतां कथां सावधानं पठत –

कदाचित् **देवर्षिः** नारदः इतस्ततः अटन् आसीत् । तदा सः **तपोबलेन** दृष्टवान् यत् **पुरुषोत्तमः** नारायणः दाशरथिः भूत्वा भूलोके **समुद्रतटे शिवलिङ्गस्य** पूजां कुर्वन् अस्ति । ततः तत्र गतः **कलहप्रियः** नारदः पूजानिरतं रामम् अपृच्छत् – ''हे **पुरुषोत्तम** ! भवान् कस्य पूजां करोति ?'' इति ।

**भक्तवत्सलः रघूत्तमः**: उक्तवान् – ''हे **मुनिश्रेष्ठ** ! अहं रामेश्वरस्य पूजां करोमि'' इति । ''कोऽयं **रामेश्वरः** ?'' इति नारदेन पृष्टः **राजीवलोचनः रामचन्द्रः** विहस्य अवदत् – '' रामस्य ईश्वरः रामेश्वरः । रामेश्वरः नाम साक्षात् **उमापतिः** शिवः । सः मम स्वामी अस्ति'' इति ।

**कलहनिपुणः** नारदः तत् श्रुत्वा ततः **शिवलोकं** प्रस्थितः । सः कैलासे **पार्वतीपरमेश्वरौ** अपश्यत् । ततः परमेश्वरं च अपृच्छत् – ''हे **उमाकान्त** ! **भूलोके** श्रीरामः 'रामस्य ईश्वरः रामेश्वरः' इति मन्यमानः भवतः पूजां करोति, भवान् न जानाति किम् ?'' इति ।

**भस्मविभूषितः नीलकण्ठः** शङ्करः अवदत् – "हे **मुनीन्द्र** ! रामेश्वरो नाम रामस्य ईश्वरः इति नार्थः, अपि तु 'रामः ईश्वरः यस्य सः' इत्यर्थः । तन्नाम रामः मम स्वामी अस्ति" इति ।

तत् श्रुत्वा **सम्भ्रान्तचित्तः** नारदः ततः **सत्यलोकम्** अधिवसन्तं **ब्रह्मदेवम्** उपगम्य पृष्टवान् – "तात ! 'रामेश्वरः' इति शब्दस्य कोऽर्थः ? रामस्य ईश्वरः, उत रामः ईश्वरः यस्य ?" इति ।

**चतुराननः** ब्रह्मा अवदत् – "वत्स ! एतदुभयमपि न साधु । रामेश्वरः नाम रामश्च असौ ईश्वरश्च इति । अर्थात् रामः एव ईश्वरः, ईश्वरः एव रामः इति । तौ द्वौ अपि अभिन्नौ एव" इति । ब्रह्मणः वचनं श्रुत्वा नारदः विस्मितः अभवत् । सः एतं श्लोकं वदन् ततः निर्गतः –

**विष्णुस्तत्पुरुषं ब्रूते बहुव्रीहिं महेश्वरः ।**
**उभयोरप्यतृप्तात्मा विरिञ्चिः कर्मधारयम् ॥**

११. १. एतेषां प्रश्नानाम् उत्तरं लिखत –

१. रामः कुत्र आसीत् ? ____________________ ।

२. नारदः कीदृशः आसीत् ? ____________________ ।

३. रामः कस्य पूजां करोति ? ____________________ ।

४. शिवः कुत्र वसति ? ____________________ ।

५. नारदः कैलासे कौ अपश्यत् ? ____________________ ।

६. सम्भ्रान्तचित्तः नारदः कुत्र गतः ? ____________________ ।

७. भस्मविभूषितः कः ? ____________________ ।

८. शिवपक्षे रामेश्वरशब्दस्य अर्थः कः ? ____________________ ।

९. नारदः कं पृष्टवान् 'रामेश्वर'शब्दस्य कोऽर्थः इति ? ______________________ ।

१०. कौ अभिन्नौ स्तः ? ______________________ ।

**एतस्यां कथायां स्थूलाक्षरैः मुद्रितानि पदानि अत्र लिखत –**

| देवर्षिः | __________ | __________ | __________ |
|---|---|---|---|
| __________ | __________ | __________ | __________ |
| __________ | __________ | __________ | __________ |
| __________ | __________ | __________ | __________ |
| __________ | __________ | __________ | __________ |

एतानि पदानि सावधानं परिशीलयत । द्वयोः पदयोः त्रयाणां पदानां वा मेलनेन एतानि पदानि सिद्धानि सन्ति । तेषु समासः अस्ति ।

जानीत–

समासशब्दस्य पदयोः योजनम् इति अर्थः । बहूनि पदानि यत्र संयोज्य एकपदत्वेन उक्तानि सन्ति तत्र समासः इति ज्ञातव्यम् । ***अनेकस्य पदस्य समसनम् (एकीभवनम्) समासः*** इति सामान्यलक्षणं प्रसिद्धम् अस्ति ।

एतत् वाक्यद्वयं परिशीलयत –

रामः लक्ष्मणः भरतः शत्रुघ्नः च दशरथस्य पुत्राः ।

रामलक्ष्मणभरतशत्रुघ्नाः दशरथस्य पुत्राः ।

प्रथमवाक्ये स्थितानि रामः लक्ष्मणः भरतः शत्रुघ्नः इत्येतानि पदानि एव संयोज्य रामलक्ष्मणभरतशत्रुघ्नाः इत्येवंरूपेण द्वितीयवाक्ये उक्तानि । अतः तत्र समासः इति व्यवहारः । रामः लक्ष्मणः भरतः शत्रुघ्नः इति **व्यस्तप्रयोगः**, रामलक्ष्मणभरतशत्रुघ्नाः इति **समस्तप्रयोगः** ।

समासे आदौ ज्ञातव्याः केचन अंशाः एते –

➪ द्वयोः बहूनां वा सुबन्तानामेव समासः भवति, न तु तिङन्तानाम् ।

यथा – १. देवस्य आलयः = देवालयः

२. धर्मः च अर्थः च कामः च मोक्षः च = धर्मार्थकाममोक्षाः

➪ परस्परम् अन्वितयोः सुबन्तयोः एव समासः भवति । यत्र परस्परान्वयः नास्ति, तत्र समासः न भवति ।

यथा – १. राज्ञः पुत्रः = राजपुत्रः ।

अत्र द्वयोः परस्परान्वयः अस्ति । अतः तयोः समासः कृतः अस्ति ।

२. दर्शनं प्राप्तं राज्ञः, पुत्रः चोरस्य धावति ।

अत्र 'राज्ञः' अन्वयः दर्शने, पुत्रस्य अन्वयः चोरे; अतः राजशब्दस्य पुत्रशब्दस्य च 'राजपुत्रः' इति समासो न भवति, परस्परान्वयाभावात् ।

➪ समासे पूर्वं श्रूयमाणं पदं पूर्वपदम्, उत्तरं श्रूयमाणं पदम् उत्तरपदम् इति व्यवहारः ।

यथा – योगानाम् ईश्वरः = योगेश्वरः। अत्र 'योग' इति पूर्वपदम्, 'ईश्वरः' इति उत्तरपदम्।

➪ समासस्य अर्थं बोधयितुं यद् वाक्यं प्रयुज्यते तद् 'विग्रहवाक्यम्' इति कथ्यते।

यथा – पुरुषोत्तमः – समस्तपदम्

पुरुषेषु उत्तमः – विग्रहवाक्यम्

अत्र विग्रहवाक्ये 'पुरुषेषु' इति सप्तमीविभक्तिः, 'उत्तमः' इति प्रथमाविभक्तिः च श्रूयते। समासे कृते तयोः द्वयोः अपि विभक्त्योः लोपः भवति। एवं पुरुषोत्तम इति शब्दो जायते। समस्तपदे तस्मिन् प्रातिपदिकमिति हेतोः प्रथमादिविभक्तयः योज्यन्ते।

यथा – पुरुष + सुप् + उत्तम + सु

पुरुष – पूर्वपदम्, सुप् – सप्तमीबहुवचनप्रत्ययः, उत्तम – उत्तरपदम्, सु – प्रथमैकवचनप्रत्ययः।

पुरुष + उत्तम = पुरुषोत्तम

पुरुषोत्तम + सु = पुरुषोत्तमः

समासभेदाः

समासे पूर्वपदस्य उत्तरपदस्य च अर्थः कश्चन भवति। कदाचित् पूर्वपदार्थस्य प्राधान्यं भवति, कदाचित् उत्तरपदार्थस्य। कदाचित् द्वयोरपि पदार्थयोः प्राधान्यं भवति, कदाचित् द्वयोरपि न भवति।

पदार्थप्राधान्यभेदेन समासः एवं चतुर्धा विभज्यते –

१. पूर्वपदार्थप्रधानः अव्ययीभावः
२. उत्तरपदार्थप्रधानः तत्पुरुषः
३. उभयपदार्थप्रधानः द्वन्द्वः
४. अन्यपदार्थप्रधानः बहुव्रीहिः

**समस्तपदे पूर्वोत्तरपदार्थयोः कतरः प्रधानः इति अवगन्तुं यत्किञ्चित् क्रियापदं स्वीकर्तव्यम्। ततः क्रियया सह कस्य अन्वयः इति परिशील्य प्रधानाप्रधानभावस्य निर्णयः कर्तव्यः।**

यथा – सीतापतिः गच्छति। अत्र 'सीतायाः पतिः' इति विग्रहवाक्यम्। 'सीता' इति पूर्वपदम्, 'पति' इति उत्तरपदम्। अत्र गमनक्रियायां 'पति' इति उत्तरपदस्य अर्थः एव अन्वितो भवति, न तु 'सीता' इति पूर्वपदस्य अर्थः। (गमनं सीतायाः पतिः रामः करोति, न तु सीता करोति इति ज्ञायते एव।) एवम् अत्र उत्तरपदार्थः प्रधानः इति निर्णयः।

एतान् श्लोकान् उच्चैः पठत, तेषु स्थूलाक्षरैः मुद्रितानि पदानि अग्रे दर्शिते रिक्तस्थाने लिखत –

**धर्मक्षेत्रे कुरुक्षेत्रे** समवेता युयुत्सवः। ____________
मामकाः पाण्डवाश्चैव किमकुर्वत संजय॥ ____________
दृष्ट्वा तु **पाण्डवानीकं** व्यूढं दुर्योधनस्तदा। ____________
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत्॥
पश्यैतां **पाण्डुपुत्राणाम्** आचार्य महतीं चमूम्। ____________
व्यूढां **द्रुपदपुत्रेण** तव शिष्येण धीमता॥ ____________

११. २. विग्रहवाक्यं पठित्वा तत्पुरतः स्थितं रिक्तं स्थानम् एतेषु उचितेन समस्तपदेन पूरयत –

१. धर्मस्य क्षेत्रम्, तस्मिन् – ______________ ।

२. कुरूणां क्षेत्रम्, तस्मिन् – ______________ ।

३. पाण्डवानाम् अनीकम् – तत् ______________ ।

४. पाण्डोः पुत्राः, तेषाम् – ______________ ।

५. द्रुपदस्य पुत्रः, तेन – ______________ ।

११. ३. यथोदाहरणं कोष्ठकस्थैः वर्णैः समस्तपदानि कृत्वा लिखत –

(आहत्य ३९ समस्तपदानि अत्र सन्ति । तेषु अवरतः २० पदानि लिखत ।)

| ज | पा | वि | श्वे | श्व | रः | अ | तिः | मृ | त्मा | हा | म |
|---|---|---|---|---|---|---|---|---|---|---|---|
| क्र | र्थ | शु | श्व | प | द्म | प | त्रम् | त्युः | स्थः | ग | यो |
| ह | सा | द्धा | भ | रू | ण | रा | वि | सं | र्षि | गे | ग |
| स्तः | र | त्मा | ता | ग | पम् | जि | न्ते | सा | श्व | ता | मा |
| अ | थिः | अ | न्य | दे | व | ताः | शः | र | सूत् | मम् | या |
| दे | हा | न्त | र | प्रा | प्तिः | दृगी | वि | सा | क्षे | अ | त्यः |
| श | रः | का | द्धिः | पः | तम् | ग | ता | ग | प | कृ | नम् |
| का | द | ले | ब | क्षि | लो | कः | यो | रः | त | प | निः |
| ले | को | क्षा | र | क | लो | र्म | का | कृ | स्था | स्पृ | नाः |
| श्व | वृ | भि | स्थि | र्त्य | क | हं | ध | सं | हः | ज | हः |
| रः | ष्मा | तः | म | हा | र | थाः | र्म | क | स्व | ध | र्मः |
| भी | नः | त | के | नि | अ | ध | के | श | वा | र्जु | नौ |

# १२. आदिमः ऋषिः

एतां कथां सावधानं पठत –

तत्पुरुषसमासः

एवं हि श्रूयते – पुरा किल **नदीतीरेषु** निबिडानि अरण्यानि आसन् । तेषु हिंस्राः पशवः सञ्चरन्ति स्म । तस्मात् नदीतीरनिवासः असुरक्षितः आसीत् । मानवः तदा गुहायां निवासं करोति स्म । कन्दमूलफलानि भक्षयन् **उदरपूरणं** करोति स्म । वल्कलानि च धरन् शरीररक्षणं करोति स्म । अग्नेः आविष्कारः तदा एव ज़ातः आसीत् ।

एतस्मिन् काले कस्याञ्चित् गुहायां कश्चन अस्वस्थचित्तः मानवः इतस्ततः चलन् आसीत् । सः चिन्तयन् आसीत् – 'का नाम शक्तिः एतस्य जगतः सञ्चालनं करोति ? का नाम शक्तिः प्रकाशं जनयति ? ध्वनिं निर्माति, गन्धान् सृजति प्रसारयति च ?' इति । सः एतेषां प्रश्नानाम् उत्तरं प्राप्तुं न शक्तः । अनेन कारणेन सः **व्याकुलतापन्नः** । 'उच्चतमं स्थानं गत्वा पश्यामि चेत् कदाचित् तस्याः शक्तेः दर्शनं भवेत्' इति चिन्तयन् **गुहानिर्गतः** सः किञ्चन उन्नतं **गिरिशिखरं** गच्छति । तत्र निष्कम्पम् उपविशति । पुरतः आसीत् पर्वतानां श्रेणी । पर्वतानां मध्ये आसन् गभीराः उपत्यकाः । ताः **छायावृक्षैः** व्याप्ताः ।

अयं मानवः नेत्रे निमीलयति । सुचिरं निश्वसिति । तदा अकस्मात् आकाशे मेघः कश्चित् गर्जितः । तद् गर्जनं पर्वत-प्रदेशे बलात् आघट्टितं सत् प्रत्यावृत्तम् । ततः क्रमेण मन्दमन्दम् आकाशे निलीनम् । तदा सः अजानन् एव तस्य अनुकरणं करोति । स च ॐकारः कण्ठे, हृदये, नासिकायां च सञ्चरति । तेन समस्ताः नाडयः स्पन्दिताः भवन्ति । समग्रे शरीरे नवोत्साहः सञ्चरति । तदा सः निर्णयति यत् इतःपरं मम सर्वोऽपि प्रयासः अस्याः शक्तेः दर्शनार्थम् इति । एवं भवति आविष्कारः आदिम-शब्दस्य ॐकारस्य । सः मानवः तां शक्तिं प्रार्थयते – 'प्रसीद, दर्शनं देहि' इति । तस्याः अदर्शनेन अस्य व्याकुलता वर्धते । सः पुनरपि नेत्रे निमील्य पुनः तां शक्तिं प्रार्थयते । तदा आकाशात् वाक्यं श्रूयते – 'नेत्रे उन्मीलय, पश्य माम् ।'

**नेत्रोन्मीलने** सति गोचरीभवति एकः सूर्यकिरणः । 'अयं तु शुभ्रः प्रकाशः । कुत्र वर्तते अस्य

मूलं दिव्याद्भुता सा शक्तिः ?' इति सः गाढं विचारयति ।

पुनश्च कश्चित् शब्दः श्रूयते । व्याकुलः सः पुनःपुनः नेत्रे निमीलयति उन्मीलयति च । अधुना कृष्णमेघतले दृश्यते सप्तवर्णसुन्दरः इन्द्रचापः । स एव किरणः सम्प्रति सप्तभिः वर्णैः विराजते । 'एकः आसम् । अधुना बहुः सम्भूतः ' इति वदन् इव अदृश्यत सः नयनानन्दकरः सूर्यकिरणः इन्द्रचापवेषः ।

'अयं वर्णविलासः । किन्तु अयं क्षणिकः । एनं हस्तेन स्प्रष्टुं न शक्नोमि' इति अचिन्तयत् सः मानवः । पुनश्च आकाशात् वाक्यम् आयाति – 'रे साधक, अधः पश्य । वनस्थल्याम् अवतरामि अहम् । स्पृश माम्, धारय माम्, स्थापय माम् ।'

सः अधः पश्यति । तत्र वर्तते नीलकण्ठः नृत्यमग्नः मयूरः । तेन प्रसारितः **सप्तवर्णमण्डितः** अद्भुतः पिच्छकलापः । सः किञ्चित् प्रसन्नः भवति । किञ्चिदिव तृप्तः सः शक्तिं वदति – ''हे देवते ! तव दर्शनं लब्धम् । तथापि तव वाणी न श्रुता । श्रुतिद्वारेण ज्ञातुम् इच्छामि त्वाम् ।''

'सावधानं शृणु' इति वदन्त्यामिव तस्याम् अकस्मात् श्रुतिपथम् आगच्छति कश्चित् केकारवः । ततः कोकिलकूजितं, ततो **मण्डूकध्वनिः** । ते एव सप्त वर्णाः सप्त स्वरा इव आविर्भूताः । अत्रान्तरे वाक्यमिदं श्रुतमिव – 'एषोऽस्मि त्वां पालयितुं लालयितुं च अवतीर्णः ।'

शनैः शनैः सः ज्ञातुं प्रारभते यत् एक एव ईश्वरः नाना रूपैः दृश्यते । सृष्टिरियम् ईशमयूरस्य अद्भुतः अनन्तः अनादिश्च पिच्छकलापः । एक एव शुभ्रः किरणः सप्तभिः वर्णैः परिणमते । एक एव ॐकारः सप्तभिः स्वरैः प्रकटितो भवति । एक एव गन्धः नाना रूपाणि धारयति । एक एव रसः अनेकरूपः प्रतिभाति ।

तदेवं स ईश्वरः दृष्टो भवति, श्रुतो भवति, रसितो भवति, स्पृष्टो भवति, घ्रातश्च भवति । सेयम् **इन्द्रियसंवेद्या** शक्तिः भगवान् इति कथ्यते । तस्मात् तत्प्राप्त्यर्थं वयं यतेमहि । *(सम्भाषणसन्देशात्)*

## अभ्यासः

१२. १. एकवाक्येन उत्तरयत –

१. मानवः कुत्र निवसति स्म ? ________________ ।

२. गुहानिर्गतः मानवः कुत्र गच्छति ? ________________ ।

३. मानवः कस्य अनुकरणं करोति ? ________________ ।

४. नेत्रोन्मीलने सति कः गोचरीभवति ? ________________ ।

५. ॐकारः कुत्र कुत्र सञ्चरति ? ________________ ।

६. का भगवान् इति कथ्यते ? ________________ ।

१२. २. रिक्तस्थानं पूरयत –

१. कन्दमूलफलानि भक्षयन् ________________ करोति स्म ।

२. अनेन कारणेन सः ________________ ।

३. ________________ गोचरीभवति एकः सूर्यकिरणः ।

४. एवं भवति आविष्कारः आदिमशब्दस्य ________________ ।

परिशीलयत –

कर्मजं **बुद्धियुक्ता** हि फलं त्यक्त्वा मनीषिणः ।
**जन्मबन्धविनिर्मुक्ताः** पदं गच्छन्त्यनामयम् ॥(२.५१)
**श्रुतिविप्रतिपन्ना** ते यदा स्थास्यति निश्चला । (२.५३)
**कामक्रोधवियुक्तानां** यतीनां यतचेतसाम् । (५.२६)
**मदर्थमपि** कर्माणि कुर्वन् सिद्धिमवाप्स्यसि । (१२.१०)
**क्षेत्रक्षेत्रज्ञसंयोगात्** तद्विद्धि भरतर्षभ । (१३.२६)

१२. ३. एतानि तत्पुरुषसमासस्य उदाहरणानि । एषु अर्थेषु समस्तपदं लिखत –

बुद्ध्या युक्ताः = ________________ ।
जन्म एव बन्धः । तस्मात् विनिर्मुक्ताः = ________________ ।
श्रुतिभिः विप्रतिपन्ना = ________________ ।
कामक्रोधाभ्यां वियुक्ताः । तेषाम् = ________________ ।
मह्यम् इदम् = ________________ ।
क्षेत्रं च क्षेत्रज्ञश्च । तयोः संयोगात् = ________________ ।

**तत्पुरुषसमासः**

कथायां प्रयुक्तानि एतानि समस्तपदानि सावधानं पठत –

| | | |
|---|---|---|
| नदीतीरम् | उदरपूरणम् | व्याकुलतापन्नः |
| गुहानिर्गतः | गिरिशिखरम् | वर्णमण्डितः |
| नेत्रोन्मीलनम् | इन्द्रियसंवेद्या | मण्डूकध्वनिः |

एतेषां विग्रहवाक्यम् इदं भवति –

नदीतीरम् – नद्याः तीरम्
उदरपूरणम् – उदरस्य पूरणम्
व्याकुलतापन्नः – व्याकुलताम् आपन्नः
गुहानिर्गतः – गुहायाः निर्गतः
गिरिशिखरम् – गिरेः शिखरम्
वर्णमण्डितः – वर्णैः मण्डितः
नेत्रोन्मीलनम् – नेत्रयोः उन्मीलनम्
इन्द्रियसंवेद्या – इन्द्रियैः संवेद्या
मण्डूकध्वनिः – मण्डूकस्य ध्वनिः

एषः तत्पुरुषसमासः अस्ति । तत्पुरुषसमासे उत्तरपदार्थः प्रधानः भवति । (प्रायः उत्तरपदार्थप्रधानः तत्पुरुषः ।) एतेषु सर्वेषु उदाहरणेषु उत्तरपदस्य अर्थः एव प्रधानः अस्ति इति ज्ञातव्यम् ।

पूर्वं यानि उदाहरणानि पठितानि तेषां विग्रहवाक्येषु पूर्वपदस्य विभक्तिः समाना नास्ति ।

यथा – नदीतीरम् – नद्याः (षष्ठीविभक्तिः) तीरम्
व्याकुलतापन्नः – व्याकुलताम् (द्वितीयाविभक्तिः) आपन्नः

गुहानिर्गतः – गुहायाः (पञ्चमीविभक्तिः) निर्गतः
इन्द्रियसंवेद्या – इन्द्रियैः (तृतीयाविभक्तिः) संवेद्या

अनेन क्रमेण पूर्वपदे सप्त अपि विभक्तयः भवितुम् अर्हन्ति। तदनुसृत्य तत्पुरुषसमासः सप्तविधः। स च यथा –

| | | समस्तपदम् | विग्रहवाक्यम् |
|---|---|---|---|
| १. प्रथमातत्पुरुषः | – | अर्धदिनम् | अर्धं दिनस्य |
| २. द्वितीयातत्पुरुषः | – | ग्रामगतः | ग्रामं गतः |
| ३. तृतीयातत्पुरुषः | – | विद्यामान्यः | विद्यया मान्यः |
| ४. चतुर्थीतत्पुरुषः | – | देशहितम् | देशाय हितम् |
| ५. पञ्चमीतत्पुरुषः | – | चोरभयम् | चोरात् भयम् |
| ६. षष्ठीतत्पुरुषः | – | देवालयः | देवस्य आलयः |
| ७ सप्तमीतत्पुरुषः | – | दानशूरः | दाने शूरः |

१२.४ . एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानां समस्तपदानां विग्रहवाक्यं लिखत –

१. **दशरथपुत्रः** श्रीरामः वनम् अगच्छत्। ________ ________
२. **बुद्धियुक्तः** (२.५१) जन्मबन्धात् विनिर्मुक्तः भवति। ________ ________
३. भगवान् **भक्त्युपहृतं** (९.२६) अश्नाति। ________ ________
४. **योगभ्रष्टः** (६.४१) शुचीनां श्रीमतां कुले जायते। ________ ________
५. **आचार्योपासनं** (१३.७) सर्वैरपि कर्तव्यम्। ________ ________
६. **युद्धविशारदाः** (१.९) सर्वे कुरुक्षेत्रे सम्मिलिताः। ________ ________
७. **मद्भक्तः** (९.३४) भव इति श्रीकृष्णः अर्जुनम् अवदत्। ________ ________
८. **मन्त्रहीनं** (१७.१३) यज्ञं तामसं परिचक्षते। ________ ________
९. यस्मिन् मानवे **आत्मरतिः** (३.१७) अस्ति –
– तेन करणीयं किमपि नास्ति। ________ ________
१०. अज्ञानां **बुद्धिभेदं** (३.२६) न जनयेत्। ________ ________

समासः ययोः कयोश्चित् सुबन्तयोः न भवति। तर्हि कीदृशयोः ? उच्यते –

⇨ प्रथमातत्पुरुषः

- पूर्वशब्दः अर्धशब्दश्च अवयविवाचकेन सुबन्तेन समासं प्राप्नोति। अवयविवाचकश्च एकवचनो भवेत्।

पूर्वं कायस्य = पूर्वकायः        अर्धं कायस्य = अर्धकायः

- पूर्व-अपर-अर्ध-मध्यशब्दाः एकदेशवाचकाः कालवाचकेन शब्देन समासं प्राप्नुवन्ति।

  पूर्वम् अह्नः = पूर्वाह्णः अपरम् अह्नः = अपराह्णः
  अर्धं रात्रेः = अर्धरात्रः मध्यम् अह्नः = मध्याह्नः
  मध्यं रात्रेः = मध्यरात्रः

### ➪ द्वितीयातत्पुरुषः -

द्वितीयाविभक्त्यन्तं पदं श्रित-अतीत-पतित-गत-प्राप्त-आपन्नशब्दैः समासं प्राप्नोति।

कृष्णं श्रितः = कृष्णश्रितः दुःखम् अतीतः = दुखातीतः
कूपं पतितः = कूपपतितः ग्रामं गतः = ग्रामगतः
शालां प्राप्तः = शालाप्राप्तः संशयम् आपन्नः = संशयापन्नः

### ➪ तृतीयातत्पुरुषः -

- तृतीयाविभक्त्यन्तं पदं पूर्व-सदृश-सम-ऊनार्थक-कलह-शब्दैः समस्यते।

  मासेन पूर्वः = मासपूर्वः मात्रा सदृशः = मातृसदृशः
  पित्रा समः = पितृसमः पादेन ऊनम् = पादोनम्
  वाचा कलहः = वाक्कलहः

- कर्तरि करणे च या तृतीया तदन्तं प्रायः कृदन्तेन समस्यते।

  हरिणा त्रातः = हरित्रातः नखैः भिन्नः = नखभिन्नः
  व्यासेन विरचितम् = व्यासविरचितम् कालिदासेन प्रणीतम् = कालिदासप्रणीतम्

### ➪ चतुर्थीतत्पुरुषः -

चतुर्थीविभक्त्यन्तं पदम् अर्थ-बलि-हित-शब्दैः समस्यते।

(अर्थशब्देन यदा समासः भवति तदा विग्रहवाक्ये अर्थशब्दो न प्रयुज्यते।)

तस्मै इदम् = तदर्थम् (३.९) दम्भाय इदम् = दम्भार्थम् (१७.१२)
मह्यम् इदम् = मदर्थम् (१२.१०) अवहासाय इदम् = अवहासार्थम् (११.४२)
भूतेभ्यो बलिः = भूतबलिः जनेभ्यो हितम् = जनहितम्

### ➪ पञ्चमीतत्पुरुषः -

पञ्चमीविभक्त्यन्तं पदं भय-भीत-भीति-भी-शब्दैः समस्यते।

चोरात् भयम् = चोरभयम् व्याघ्रात् भीतः = व्याघ्रभीतः
सर्पात् भीतिः = सर्पभीतिः वृश्चिकात् भीः = वृश्चिकभीः

➪ षष्ठीतत्पुरुषः –

षष्ठीविभक्त्यन्तं पदं सुबन्तेन समस्यते।

| | |
|---|---|
| पाण्डोः पुत्रः = पाण्डुपुत्रः (१.३) | स्वर्गस्य द्वारम् = स्वर्गद्वारम् (२.३२) |
| प्रजानां पतिः = प्रजापतिः (३.१०) | मृगाणां राजा = मृगराजः |
| तस्य मूलम् = तन्मूलम् | गीतायाः उपदेशः = गीतोपदेशः |
| मम भक्तः = मद्भक्तः (१८.६५) | कर्मफलस्य त्यागी = कर्मफलत्यागी |

➪ सप्तमीतत्पुरुषः –

सप्तमीविभक्त्यन्तं पदं पण्डित–कुशल–निपुण–प्रवीणादिशब्दैः समस्यते।

| | |
|---|---|
| धनुर्विद्यायां कुशलः = धनुर्विद्याकुशलः | वेणुवादने निपुणः = वेणुवादननिपुणः |
| शास्त्रेषु पण्डितः = शास्त्रपण्डितः | कुरुषु श्रेष्ठः = कुरुश्रेष्ठः |
| पुरुषेषु उत्तमः = पुरुषोत्तमः | नाट्ये प्रवीणः = नाट्यप्रवीणः |

१२. ५. यथोदाहरणम् एषु अर्थेषु समस्तपदं समासनाम च लिखत –

| | | | |
|---|---|---|---|
| उदा – **गुणान् अतीतः** – | **गुणातीतः** | **(१४.२५)** | **द्वितीयातत्पुरुषः** |
| १. योगम् आरूढः | ________ | (६.४) | ________ – |
| २. सर्वं गतः | ________ | (२.२४) | ________ – |
| ३. कामान् कामी | कामान् कामी | (२.७०) | ________ – |
| ४. विधिना दृष्टः | ________ | (१७.११) | ________ – |
| ५. बुद्ध्या युक्तः | ________ | (२.५१) | ________ – |
| ६. भक्त्या उपहृतम् | ________ | (९.२६) | ________ – |
| ७. मन्त्रैः हीनम् | ________ | (१७.१३) | ________ – |
| ८. श्रद्धया विरहितम् | ________ | (१७.१३) | ________ – |
| ९. गुणैः अन्वितम् | ________ | (१५.१०) | ________ – |
| १०. दम्भाय इदम् | ________ | (१७.१२) | ________ – |
| ११. मह्यम् इदम् | ________ | (१२.१०) | ________ – |
| १२. अवहासाय इदम् | ________ | (११.४२) | ________ – |
| १३. योगात् भ्रष्टः | ________ | (६.४१) | ________ – |
| १४. अमृतात् उद्भवः | ________ | (१०.२७) | ________ – |
| १५. कर्मणः समुद्भवः | ________ | (३.१४) | ________ – |
| १६. आचार्यस्य उपासनम् | ________ | (१३.७) | ________ – |

| | | | |
|---|---|---|---|
| १७. मम भक्तः | ———————— | (९.३४) | ———————— |
| १८. नरलोकस्य वीराः | ———————— | (११.२८) | ———————— |
| १९. आत्मनि रतिः | ———————— | (३.१७) | ———————— |
| २०. युद्धे विशारदः | ———————— | (१.९) | ———————— |

**कर्मधारयसमासः**

एतानि वाक्यानि परिशीलयत –

भाण्डे **उष्णोकदम्** अस्ति ।

**मेघश्यामः** श्रीकृष्णः सर्वेषां प्रियः ।

**पुरुषसिंहः** चन्द्रशेखर-आजादः देशाय प्राणान् अर्पितवान् ।

**विद्याधनं** सर्वधनप्रधानम् इति वचनं प्रसिद्धम् ।

**हिमालयपर्वतः** भारतस्य उत्तरभागे विराजते ।

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानां समस्तपदानां विग्रहवाक्यम् इदं भवति –

उष्णम् उदकम् = उष्णोदकम्
मेघः इव श्यामः = मेघश्यामः
पुरुषः सिंहः इव = पुरुषसिंहः
विद्या एव धनम् = विद्याधनम्
हिमालयः इति पर्वतः = हिमालयपर्वतः

एतानि सर्वाणि अपि कर्मधारयसमासस्य उदाहरणानि । कर्मधारयसमासः तत्पुरुषसमासस्य भेदः । कर्मधारयसमासे पूर्वपदम् उत्तरपदं चापि प्रथमाविभक्त्यन्तं भवति ।

**कर्मधारयसमासभेदाः**

⇨ विशेषणपूर्वपदः कर्मधारयः

उष्ण-शीत-दीर्घ-ह्रस्व-श्वेत-कृष्णादयः शब्दाः विशेषणानि भवन्ति इति वयं जानीमः । यत्र पूर्वपदं विशेषणं भवति (उत्तरपदं तु विशेष्यं भवति एव ।) सः विशेषणपूर्वपदः कर्मधारयः ।

यथा – दीर्घा रज्जुः = दीर्घरज्जुः
उन्नतः पर्वतः = उन्नतपर्वतः
साधुः पुरुषः = साधुपुरुषः
क्रूरः जन्तुः = क्रूरजन्तुः

⇨ उपमानपूर्वपदः कर्मधारयः

चन्द्रादयः शब्दाः उपमानत्वेन प्रसिद्धाः । यत्र पूर्वपदम् उपमानं भवति सः उपमानपूर्वपदः कर्मधारयः ।

यथा – चन्द्रः इव मनोहरः = चन्द्रमनोहरः

अरविन्दम् इव सुन्दरम् = अरविन्दसुन्दरम्
कुसुमम् इव कोमलम् = कुसुमकोमलम्
मेघः इव श्यामः = मेघश्यामः

➪ उपमानोत्तरपदः कर्मधारयः

यत्र उत्तरपदम् उपमानं भवति सः उपमानोत्तरपदः कर्मधारयः ।

यथा – पुरुषः व्याघ्रः इव = पुरुषव्याघ्रः
नरः शार्दूलः इव = नरशार्दूलः
पुरुषः ऋषभः इव = पुरुषर्षभः

➪ अवधारणापूर्वपदः कर्मधारयः

यत्र अवधारणा (निश्चयः) इत्यर्थः प्रतीयते सः अवधारणापूर्वपदः कर्मधारयः । अवधारणार्थं द्योतयितुं विग्रहवाक्ये पूर्वपदात् परम् 'एव'कारः प्रयुज्यते ।

यथा – विद्या एव धनम् = विद्याधनम्
तपः एव धनम् = तपोधनम्
गुरुः एव देवः = गुरुदेवः
ज्ञानम् एव सम्पत्तिः = ज्ञानसम्पत्तिः

➪ सम्भावनापूर्वपदः कर्मधारयः

यत्र पूर्वपदं विशेषणं भवति, तच्च संज्ञापदमेव भवति सः सम्भावनापूर्वपदः कर्मधारयः । अत्र विग्रहवाक्ये पूर्वपदात् परम् 'इति' इति पदं प्रयुज्यते ।

यथा – अयोध्या इति नगरी = अयोध्यानगरी
दुष्यन्तः इति नृपः = दुष्यन्तनृपः
नारिकेलः इति वृक्षः = नारिकेलवृक्षः
गीता इति ग्रन्थः = गीताग्रन्थः

➪ मध्यमपदलोपी कर्मधारयः

अत्र विग्रहवाक्ये पूर्वपदस्य उत्तरपदस्य च मध्ये अन्यदपि पदं दृश्यते, किन्तु तत् समस्तपदे नैव दृश्यते ।

यथा – छायाबहुलाः वृक्षाः = छायावृक्षाः
द्विगुणितं शतम् = द्विशतम्
द्व्यधिकाः दश = द्वादश

यद्यपि विशेषणोत्तरपदः, विशेषणोभयपदः, मयूरव्यंसकादिः इति कर्मधारयस्य अन्येऽपि भेदाः सन्ति, तथापि ते अत्र न विवृताः, विस्तरभयात् ।

१२. ६. अधस्तने कोष्ठके स्थितानि पदानि यथोदाहरणं योजयत –

| कर्मधारयसमासभेदः | उदाहरणम् |
|---|---|
| विशेषणपूर्वपदः | घनश्यामः |
| उपमानपूर्वपदः | शीलधनम् |
| उपमानोत्तरपदः | विन्ध्यपर्वतः |
| अवधारणापूर्वपदः | सर्वद्वाराणि |
| मध्यमपदलोपी | पुरुषव्याघ्रः |
| सम्भावनापूर्वपदः | देवब्राह्मणः |

**द्विगुसमासः**

एतानि वाक्यानि परिशीलयत –

भगवान् स्कन्दः **षाण्मातुरः** अस्ति ।
इदानीं चैत्रमासस्य प्रथमः **सप्ताहः** प्रवर्तमानः अस्ति ।
सत्पुरुषाः स्वकार्यैः **त्रिभुवनम्** अपि तोषयन्ति ।
**पञ्चवटी** सीतारामयोः प्रियं स्थानम् आसीत् ।

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानां समस्तपदानां विग्रहवाक्यम् इदं भवति –

षण्णां मातॄणाम् अपत्यम् = षाण्मातुरः
सप्तानाम् अह्नां समाहारः = सप्ताहः
त्रयाणां भुवनानां समाहारः = त्रिभुवनम्
पञ्चानां वटानां समाहारः = पञ्चवटी

एतानि सर्वाणि अपि द्विगुसमासस्य उदाहरणानि । द्विगुसमासः अपि तत्पुरुषसमासस्य भेदः । द्विगुसमासे पूर्वपदं संख्यावाचकं भवति ।

द्विगुसमासस्य एतेषु उदाहरणेषु उत्तरपदे विशेषं स्मरत –

त्रयाणां लोकानां समाहारः = त्रिलोकी
नवानां रात्रीणां समाहारः = नवरात्रम्
पञ्चानां गवां समाहारः = पञ्चगवम्

**नञ्समासः**

एतानि वाक्यानि परिशीलयत –

केनापि **असत्यं** न वक्तव्यम् ।
**अधर्मः** विनाशस्य कारणं वर्तते ।
**असन्देहः** मैत्रीभावं द्रढयति ।

**अविश्वासः** सख्यं नाशयति ।

बन्धूनाम् **अनागमनं** दुःखाय कल्पते ।

**अपटुः** लोके यशः न प्राप्नोति ।

अल्पेन कालेन अग्नितैलस्य **अनुपलब्धिः** भविष्यति इति केचन वदन्ति ।

**अनश्वः** अश्वसमूहे न शोभते ।

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानां समस्तपदानां विग्रहवाक्यम् इदं भवति –

| | | | | | |
|---|---|---|---|---|---|
| न सत्यम् | → | असत्यम् | न धर्मः | → | अधर्मः |
| न सन्देहः | → | असन्देहः | न विश्वासः | → | अविश्वासः |
| न आगमनम् | → | अनागमनम् | न पटुः | → | अपटुः |
| न उपलब्धिः | → | अनुपलब्धिः | न अश्वः | → | अनश्वः |

१२. ७. अत्र समस्तपदं लिखत –

न अन्यः ______________

न निन्द्यः ______________

न इष्टम् ______________

न हितम् ______________

न नीतिः ______________

न क्रोधः ______________

१२. ८. यथोदाहरणं स्थूलाक्षरैः मुद्रितानां पदानां विग्रहवाक्यं लिखत –

उदा – **अभयं** सत्त्वसंशुद्धिः ज्ञानयोगव्यवस्थितिः । (१६.१) **न भयम्**

१. अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।(२.२४)

**अच्छेद्यः अदाह्यः अक्लेद्यः अशोष्यः** ______________

______________

२. इन्द्रियार्थेषु वैराग्यम् **अनहङ्कारः** एव च । (१३.८) ______________

३. **अनिच्छन्** अपि वार्ष्णेय बलादिव नियोजितः । (३.३६) ______________

४. **अनित्यम्** असुखं लोकम् इमं प्राप्य भजस्व माम् । (९.३३) ______________

५. सम्भावितस्य च **अकीर्तिः** मरणादतिरिच्यते । (२.३४) ______________

६. अवाच्यवादांश्च बहून् वदिष्यन्ति तव **अहिताः** । (२.३६) ______________

७. न हि कश्चित् क्षणमपि जातु तिष्ठति **अकर्मकृत्** । (३.५) ________________

८. **असक्तो** ह्याचरन् कर्म परमाप्नोति पूरुषः । (३.१९) ________________

९. सक्ताः कर्मणि **अविद्वांसो** यथा कुर्वन्ति भारत । (३.२५) ________________

१०. **अविनाशि** तु तद्विद्धि येन सर्वमिदं ततम् । (२.१७) ________________

११. **अविभक्तं** च भूतेषु विभक्तमिव च स्थितम् । (१३.१६) ________________

१२. **अद्वेष्टा** सर्वभूतानां मैत्रः करुण एव च । (१२.१३) ________________

'न' इति अन्यदपि अव्ययम् अस्ति । तदपि सुबन्तेन समासं प्राप्नोति । परं तेन यदा समासः भवति तदा तु नकारस्य लोपः न भवति ।

यथा – न एकधा → नैकधा न अन्तरीयकम् → नान्तरीयकम्

यद्यपि कर्मधारयसमासस्य अन्येऽपि भेदाः सन्ति तथापि संक्षेपदृष्ट्या तेषां विवरणं न कृतमिति बोध्यम् ।

**अवधेयम्**

**एतानि सर्वाणि नञ्समासस्य उदाहरणानि –**

नञ् इति किञ्चन अव्ययम् । तत् सुबन्तेन समासं प्राप्नोति । नञ् इत्यत्र नकारस्य ञकारस्य च लोपः भवति । 'अ'कारमात्रं शिष्यते ।

एतानि उदाहरणानि परिशीलयत –

न योगः → **अयोगः** न सम्बन्धः → **असम्बन्धः**

न भुक्तिः → **अभुक्तिः** न कर्ता → **अकर्ता**

न आसक्तिः → **अनासक्तिः** न ईश्वरः → **अनीश्वरः**

न ऊढः → **अनूढः** न एकः → **अनेकः**

एतेषु सर्वेषु उदाहरणेषु पूर्वपदं नञ् अस्ति । उत्तरपदे आदिमवर्णः केषुचित् व्यञ्जनम् अस्ति, केषुचित् स्वरः अस्ति ।

यत्र आदिमः वर्णः स्वरः अस्ति तत्र रूपे कश्चन भेदः भवति ।

यदि उत्तरपदे आदिमः वर्णः स्वरः अस्ति तर्हि तस्मात् पूर्वं नञः अकारात् परतः 'न्' (नुड्) इति वर्णः आगमः भवति ।

यथा – न आसक्तिः = अ + न् + आसक्तिः → अनासक्तिः

न ईश्वरः = अ + न् + ईश्वरः → अनीश्वरः

न ऊढः = अ + न् + ऊढः → अनूढः

न एकः = अ + न् + एकः → अनेकः

# १३. अहङ्कारविमूढात्मा

बहुव्रीहिसमासः

एतेषु गीताश्लोकेषु स्थूलाक्षरैः मुद्रितानि पदानि परिशीलयत –

**स्थितप्रज्ञस्य** का भाषा समाधिस्थस्य केशव ।
**स्थितधीः** किं प्रभाषेत किमासीत व्रजेत किम् ॥ (२.५४)

दुःखेष्वनुद्विग्नमनाः सुखेषु **विगतस्पृहः** ।
**वीतरागभयक्रोधः** स्थितधीर्मुनिरुच्यते ॥ (२.५६)

योगयुक्तो **विशुद्धात्मा विजितात्मा जितेन्द्रियः** ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ (५.७)

एतानि बहुव्रीहिसमासस्य उदाहरणानि सन्ति ।

यथोदाहरणं रिक्तस्थानानि पूरयत –

**उदा. – अनुद्विग्नं मनः यस्य सः = अनुद्विग्नमनाः ।**

१. स्थिता प्रज्ञा यस्य सः = __________ ।

२. विगता स्पृहा यस्मात् सः = __________ ।

३. रागश्च भयं च क्रोधश्च रागभयक्रोधाः
वीताः रागभयक्रोधाः यस्मात् सः = __________ ।

४. विशुद्धः आत्मा यस्य सः = __________ ।

५. विजितः आत्मा येन सः
= __________ ।

६. जितानि इन्द्रियाणि येन सः
= __________ ।

एतां कथां सावधानं पठत –

उदयपुरीं विशालाक्षनामकः महाराजः परिपालयति स्म । सः अतीव अहङ्कारी आसीत् । कदाचित् **आरूढरथेन** तेन मृगयार्थम् अरण्यं गतम् । तत्र कश्चन संन्यासी दृष्टः । संन्यासी नेत्रे निमील्य **एकचित्तः** देवं ध्यायति स्म । महाराजः ध्यानमग्नं संन्यासिनम् उद्दिश्य – ''संन्यासिन् ! बहून् देशान् वशीकृत्य मया साम्राज्यविस्तारणं कृतम् अस्ति । **वशीकृतान्यदेशेन** मया अपारं धनकनकराशिं संगृह्य भाण्डागारं पूरितम् । ततः आनीताः बह्व्यः सुन्दर्यः विराजन्ते मम अन्तःपुरे । तथापि मम सन्तोषः नास्ति । कथम् अहं सन्तोषं प्राप्नुयाम् ?'' इति अपृच्छत् ।

**त्रुटितध्यानः** सः संन्यासी **उन्मीलितनयनः** सन् क्रुद्धः इव अवदत् – ''यदा 'अहं' म्रियते तदैव **प्राप्तसन्तोषः** भविष्यसि'' इति । ततः सः पुनरपि नेत्रे निमील्य ध्यानमग्नः अभवत् । महाराजस्तु – 'अहो, असम्बद्धप्रलापी अयं महाराजं माम् अपमानयति । तद् दण्डयामि एनम्' इति मनसि विचिन्त्य निश्शङ्कं खड्गम् आकृष्य संन्यासिनं मारयितुम् उद्युक्तः अभूत् ।

संन्यासी अवदत् – ''अयि मूढ ! 'अहम्' इत्यनेन नायं जनः अभिप्रेतः । अपि तु भवदीयः अहम्भावः । सः यदा म्रियते तदैव सन्तोषं प्राप्नोषि इति उक्तं मया'' इति ।

संन्यासिनः वचनं श्रुत्वा **विदिताभिप्रायः** राजा **विगतगर्वः** अभूत् ।

१३. १. एतेषां प्रश्नानाम् उत्तरं लिखत –

१. उदयपुरीं कः परिपालयति स्म ? ―――――――――― ।
२. संन्यासी कं ध्यायति स्म ? ―――――――――― ।
३. त्रुटितध्यानः संन्यासी किम् अवदत् ? ―――――――――― ।
४. कः संन्यासिनं मारयितुम् उद्युक्तः ? ―――――――――― ।
५. संन्यासी किमिति महाराजस्य सम्बोधनम् अकरोत् ? ―――――――――― ।
६. कः विगतगर्वः अभूत् ? ―――――――――― ।

१३. २. रिक्तस्थानं पूरयत –

१. कदाचित् ―――――― तेन मृगयार्थम् अरण्यं गतम् ।
२. यदा 'अहं' म्रियते तदैव ―――――― भविष्यसि ।
३. महाराजं माम् ―――――― ।
४. विदिताभिप्रायः राजा ―――――― अभूत् ।

एतानि पदानि सावधानं पठत –

| | |
|---|---|
| आरूढरथः | एकचित्तः |
| वशीकृतान्यदेशः | त्रुटितध्यानः |
| अन्मीलितनयनः | प्राप्तसन्तोषः |
| विदिताभिप्रायः | विगतगर्वः |

एतेषां समस्तपदानां विग्रहवाक्यम् इदं भवति –

| | |
|---|---|
| आरूढः रथः येन सः | = आरूढरथः |
| एकं चित्तं यस्य सः | = एकचित्तः |
| वशीकृताः अन्यदेशाः येन सः | = वशीकृतान्यदेशः |

त्रुटितं ध्यानं यस्य सः = त्रुटितध्यानः
उन्मीलिते नयने येन सः = उन्मीलितनयनः
प्राप्तः सन्तोषः यं सः = प्राप्तसन्तोषः
विदितः अभिप्रायः येन सः = विदिताभिप्रायः
विगतः गर्वः यस्य सः = विगतगर्वः

**बहुव्रीहिसमासः**

एतानि वाक्यानि सावधानं परिशीलयत –

**प्राप्तविद्यः** सर्वत्र कीर्तिं प्राप्नोति ।
**कृतभोजनः** गाढं निद्राति ।
**दत्तभिक्षः** दातारं स्तौति ।
**पतितपुष्पः** वनशोभां न वर्धयति ।
**पीताम्बरः** वैकुण्ठे निवसति ।
**बहुपण्डिता** वाराणसी जगत्प्रसिद्धा ।

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानां समस्तपदानां विग्रहवाक्यम् इदं भवति –

प्राप्ता विद्या यं सः प्राप्तविद्यः । (छात्रः)
कृतं भोजनं येन सः कृतभोजनः । (पुरुषः)
दत्ता भिक्षा यस्मै सः दत्तभिक्षः । (भिक्षुकः)
पतितानि पुष्पाणि यस्मात् सः पतितपुष्पः । (वृक्षः)
बहवः पण्डिताः यस्यां सा बहुपण्डिता । (नगरी)

एतानि सर्वाणि अपि बहुव्रीहिसमासस्य उदाहरणानि । बहुव्रीहिः प्रायः अन्यपदार्थप्रधानः इति लक्षणं पूर्वम् उक्तमेव । अतः एतेषु उदाहरणेषु न पूर्वपदार्थस्य प्राधान्यं, नापि उत्तरपदार्थस्य । किन्तु अन्यस्य एव अर्थस्य । यथा – चक्रपाणिः कथयति इत्यत्र कथनक्रियायाः अन्वयः न चक्रेण, न वा पाणिना । अपि तु पाणिना चक्रं धृतवता नारायणेन । परं सः नारायणः न पूर्वपदार्थः, नापि उत्तरपदार्थः । स च अन्यः एव अर्थः । एवम् अन्यत्रापि ।

**बहुव्रीहिसमासभेदाः**

यद्यपि बहुव्रीहिसमासस्य बहवः भेदाः सन्ति तथापि अत्र भेदत्रयमेव निरूप्यते –

**१. समानाधिकरणबहुव्रीहिः**

पूर्वं दर्शितेषु प्राप्तविद्यः, कृतभोजनः, दत्तभिक्षः, पतितपुष्पः, बहुपण्डिता – इत्येतेषु उदाहरणेषु विग्रहवाक्ये पूर्वपदम् उत्तरपदं च समानविभक्त्यन्तम् अस्ति । एषः समानाधिकरणबहुव्रीहिः ।

१३. ३. यथोदाहरणम् एतेषु अर्थेषु समस्तपदं लिखत –

उदा. **स्थिता प्रज्ञा यस्य सः** – **स्थितप्रज्ञः (२.५५)**
१. व्यपेता भीः यस्मात् सः – ____________ (११.४९)

२. ज्ञानं चक्षुः येषां ते – ________________ (१५.१०)
३. जितः आत्मा येन सः – ________________ (१८.४९)
४. ऊर्ध्वं मूलं यस्य सः – ________________ (१५.१)
५. त्यक्तं जीवितं यैः ते – ________________ (१.९)
६. चलितं मानसं यस्य सः – ________________ (६.३७)
७. जितानि इन्द्रियाणि येन सः – ________________ (५.७)
८. छिन्नः संशयः यस्य सः – ________________ (१८.१०)
९. त्यक्तः सर्वपरिग्रहः येन सः – ________________ (४.२१)
१०. कृतः निश्चयः येन सः – ________________ (२.३७)

### २. व्यधिकरणबहुव्रीहिः

एतानि उदाहरणानि परिशीलयत –

**चन्द्रमौलिः** कैलासे निवसति ।
**चक्रपाणिः** शिशुपालम् अमारयत् ।
**विषकण्ठः** ताण्डवनृत्यम् अकरोत् ।
**पद्मनाभः** लोकान् परिपालयति ।
**ऊर्णनाभः** जालं विरचयति ।

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानां समस्तपदानां विग्रहवाक्यम् इदं भवति –

चन्द्रः मौलौ यस्य सः चन्द्रमौलिः । (शिवः)
चक्रं पाणौ यस्य सः चक्रपाणिः । (विष्णुः)
विषं कण्ठे यस्य सः विषकण्ठः । (शिवः)
पद्मं नाभौ यस्य सः पद्मनाभः । (विष्णुः)
ऊर्णं नाभौ यस्य सः ऊर्णनाभः । (प्राणिविशेषः)

एतेषु उदाहरणेषु विग्रहवाक्ये पूर्वपदं प्रथमाविभक्त्यन्तम् अस्ति, उत्तरपदं च सप्तमीविभक्त्यन्तम् । एवं यत्र पूर्वपदम् उत्तरपदं च भिन्नविभक्त्यन्तं भवति सः व्यधिकरणबहुव्रीहिः ।

१३. ४. एतेषु अर्थेषु यथोदाहरणं समस्तपदं लिखत –

उदा. **चक्रं हस्ते यस्य सः** – **चक्रहस्तः** (११.४६)
१. शस्त्रं पाणौ येषां ते – ________________ (१.४६)
२. कपिः ध्वजे यस्य सः – ________________ (१.२०)
३. भाले नेत्रं यस्य सः – ________________
४. कोदण्डः पाणौ यस्य सः – ________________
५. आयुधं पाणौ येषां ते – ________________

६. लगुडः हस्ते यस्य सः – ____________

७. वीणा पाणौ यस्याः सा – ____________

८. कमलं हस्ते यस्याः सा – ____________

### ३. नञ्बहुव्रीहिः

एतानि उदाहरणानि परिशीलयत –

**अधनः** जनः किमपि क्रेतुं न शक्नोति ।

**अविद्यः** जीवने कष्टम् आप्नोति ।

**अशिष्यः** गुरुः उपहासपात्रं भवति ।

**अनपत्यः** अनुदिनं दुःखम् अनुभवति ।

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानां समस्तपदानां विग्रहवाक्यम् इदं भवति –

अविद्यमानं धनं यस्य सः अधनः । / (अविद्यमानधनः)

अविद्यमाना विद्या यस्य सः अविद्यः । / (अविद्यमानविद्यः)

अविद्यमानः शिष्यः यस्य सः अशिष्यः । / (अविद्यमानशिष्यः)

अविद्यमानम् अपत्यं यस्य सः अनपत्यः । / (अविद्यमानापत्यः)

एतानि सर्वाणि नञ्बहुव्रीहिसमासस्य उदाहरणानि ।

अविद्यमानम् इति पदं सुबन्तेन समासं प्राप्नोति । समासे जाते विद्यमानपदस्य विकल्पेन लोपः भवति । प्रायः बहुव्रीहिः उत्तरपदार्थप्रधानः इति लक्षणम् अत्रापि संगच्छते एव । अतः अत्रापि उत्तरपदार्थस्य एव प्राधान्यम् । यथा – अविद्यमानः शिष्यः यस्य सः अशिष्यः = गुरुः इत्यर्थः । अत्र सर्वत्रापि 'न विद्यते शिष्यः यस्य सः' इत्यादिनापि प्रकारान्तरेण विग्रहवाक्यं प्रदर्शयितुं शक्यम् ।

१३. ५. एतेषु गीतावाक्येषु स्थूलाक्षरैः मुद्रितानां समस्तपदानां विग्रहवाक्यं लिखत –

१. **अनन्तः** चास्मि नागानां वरुणो यादसामहम् । (१०.२९) ____________

२. यो मामजम् **अनादिं** च वेत्ति लोकमहेश्वरम् । (१०.३) ____________

३. **अनिकेतः** स्थिरमतिः भक्तिमान्मे प्रियो नरः । (१२.१९) ____________

४. यदि मामप्रतीकारम् **अशस्त्रम्** शस्त्रपाणयः । (१.४६) ____________

५. जन्मबन्धविनिर्मुक्ताः पदं गच्छन्ति **अनामयम्** । (२.५१) ____________

६. **अनपेक्षः** शुचिर्दक्ष उदासीनो गतव्यथः । (१२.१६) ____________

७. **अनन्य**चेताः सततं यो मां स्मरति नित्यशः । (८.१४)(अनन्यम्) ____________

नञ्तत्पुरुषसमासः अस्माभिः पूर्वत्र पाठे ज्ञातः । तत्र उत्तरपदार्थः प्रधानः, अत्र तु अन्यपदार्थः प्रधानः इति भेदः ।

**वि. सू.** – यद्यपि बहुव्रीहिसमासस्य अन्येऽपि भेदाः सन्ति तथापि संक्षेपदृष्ट्या तेषां विवरणं न कृतमिति बोध्यम् ।

# १४. रहस्यमिदमुच्यते

द्वन्द्वसमासः

एतेषु गीताश्लोकेषु स्थूलाक्षरैः मुद्रितानि पदानि परिशीलयत –

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
**हर्षामर्षभयोद्वेगैः** मुक्तो यः स च मे प्रियः ॥ (१२.१५)

समः शत्रौ च मित्रे च तथा **मानापमानयोः** ।
**शीतोष्णसुखदुःखेषु** समः सङ्गविवर्जितः ॥ (१२.१८)

**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः** ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ (१७.९)

एतानि द्वन्द्वसमासस्य उदाहरणानि । एतेषु अर्थेषु समस्तपदं लिखत –

१. हर्षश्च अमर्षश्च भयं च उद्वेगश्च, तैः = ____________ ।
२. मानश्च अपमानश्च, तयोः = ____________ ।
३. शीतं च उष्णं च सुखं च दुःखं च, तेषु = ____________ ।
४. कटुश्च अम्लश्च लवणश्च अत्युष्णश्च तीक्ष्णश्च रूक्षश्च विदाही च
= ____________ ।

एतां कथां सावधानं पठत –

कदाचित् **कृष्णार्जुनौ** अटनार्थं प्रस्थितौ । तौ च **अहोरात्रं ग्रामवननगरेषु** अटितवन्तौ । अटन्तौ तौ स्वस्य सर्वं क्लेशं विस्मृत्य विविधानि **शुभाशुभानि** अनुभूतवन्तौ, विस्मयकराणि च दृश्यानि दृष्टवन्तौ । **सर्पनकुलस्य** सङ्घर्षः, **गजसिंहयोः** युद्धं, **खगमृगाणाम्** आलापः, **काकोलूकस्य** च कलहः इत्यादिकं सर्वं तौ साश्चर्यम् अपश्यताम् ।

एकदा **क्षुत्पिपासाभ्यां** पीडितौ तौ कञ्चन ग्रामं प्राप्तवन्तौ । समीपं किञ्चन गृहं गत्वा यदा जलं याचितं तदा गृहस्वामी तौ उच्चैः तर्जितवान् । ततः बहुषु गृहेषु तदेव अनुभूतम् । **कामक्रोधौ, लोभमोहौ, मदमात्सर्ये** च दोषाः तान् जनान् परोपकारात् निवारयन्ति स्म । न कुत्रापि **माधवार्जुनौ खाद्यपेयं** प्राप्तवन्तौ । तथापि **धर्माधर्मवेत्ता** श्रीकृष्णः तान् ग्रामजनान् आशिषा अनुगृहीतवान् ।

ततः अटन्तावेव **केशवार्जुनौ** अन्यं ग्रामं प्राप्तवन्तौ ।

तत्र कस्मिंश्चित् गृहे जले याचिते सति क्षीरं भोज्यं च प्राप्तवन्तौ। तस्मिन् ग्रामे अन्येषु त्रिचतुरेषु गृहेषु अपि तादृशमेव आतिथ्यं प्राप्तम्। **लाभालाभौ, रागद्वेषौ, निन्दास्तुती** वा तान् जनान् न बाधन्ते स्म। **धर्ममोक्षौ, यज्ञदानतपांसि** एव तेषां लक्ष्यम् आसीत्। भगवान् कृष्णः तान् उद्दिश्य अवदत् – ''अस्मिन् ग्रामे दुर्भिक्षं भवतु। **नदीतटाकाः** निर्जलाः भवन्तु। वृक्षेषु लतासु च **फलपुष्पाणि** मा वर्धन्ताम्'' इति। विस्मितः अर्जुनः अपृच्छत् – ''भगवन्! भवान् तु कृपासागरः, सर्वेषां **योगक्षेमं** वहति, एवं सति कथं दुष्टान् आशिषा अनुगृहीतवान्? सज्जनान् च शप्तवान्?'' इति।

श्रीकृष्णः अवदत् – ''पार्थ! भवान् **सृष्टिस्थितिलयस्य** रहस्यं न जानाति। यदि विघ्नाः कष्टानि च भवन्ति तर्हि ग्रामे जनाः तत्र चिरं न तिष्ठन्ति। ते आश्रयम् अन्विष्यन्तः अन्यत् अन्यत् स्थानम् उपगच्छन्ति। तेन तेषु वर्तमानाः सद्गुणाः सर्वत्र प्रसृताः भवन्ति। ग्रामे यदि सर्वविधं सौकर्यं भवति तर्हि जनाः **सुखभोगेषु** रममाणाः बहिः नैव गच्छन्ति, येन तेषां सद्गुणाः तत्रैव भवन्ति। उत्तमानां गुणानां प्रसारः यदि सर्वत्र इष्यते तर्हि उत्तमजनानां सर्वत्र गमनम् अपेक्षणीयम्। तस्मात् अहं सज्जनानाम् अशुभम् आकांक्षितवान्'' इति।

एतत् रहस्यं श्रुत्वा कृष्णस्य स्वस्य च अन्तरं विजानन् अर्जुनः परं विस्मयम् अगमत्।

१४. १. एकवाक्येन उत्तरयत –

१. कौ अटनार्थं प्रस्थितौ? ______________________।

२. धर्माधर्मवेत्ता कः? ______________________।

३. भगवान् कृष्णः ग्रामजनान् उद्दिश्य किमवदत्? ______________________।

४. विस्मितः अर्जुनः किम् अपृच्छत्? ______________________।

५. के सुखभोगेषु रममाणाः बहिः नैव गच्छन्ति? ______________________।

१४. २. रिक्तस्थानं पूरयत –

१. ततः अटन्तावेव ______________ अन्यं ग्रामं प्राप्तवन्तौ।

२. वृक्षेषु लतासु च ______________ मा वर्धन्ताम्।

३. पार्थ! भवान् ______________ रहस्यं न जानाति।

४. तस्मात् अहम् ______________ अशुभम् आकांक्षितवान्।

**द्वन्द्वसमासः**

कथायां स्थूलाक्षरैः मुद्रितानि एतानि समस्तपदानि सावधानं पठत –

| | | |
|---|---|---|
| कृष्णार्जुनौ | अहोरात्रः | ग्रामवननगरेषु |
| शुभाशुभानि | सर्पनकुलस्य | गजसिंहयोः |
| खगमृगाणाम् | क्षुत्पिपासाभ्याम् | कामक्रोधौ |
| लोभमोहौ | धर्ममोक्षौ | यज्ञदानतपांसि |
| योगक्षेमम् | सृष्टिस्थितिलयस्य | |

एतेषां समस्तपदानां विग्रहवाक्यम् इदं भवति –

यथा –
कृष्णश्च अर्जुनश्च = कृष्णार्जुनौ
अहश्च रात्रिश्च = अहोरात्रः
ग्रामश्च वनं च नगरं च = ग्रामवननगराणि, तेषु
शुभानि च अशुभानि च = शुभाशुभानि
सर्पश्च नकुलश्च अनयोः समाहारः = सर्पनकुलम्, तस्य
गजश्च सिंहश्च = गजसिंहौ, तयोः
खगाश्च मृगाश्च = खगमृगाः, तेषाम्
क्षुत् च पिपासा च = क्षुत्पिपासे, ताभ्याम्
कामश्च क्रोधश्च = कामक्रोधौ
लोभश्च मोहश्च = लोभमोहौ
धर्मश्च मोक्षश्च = धर्ममोक्षौ
यज्ञश्च दानं च तपश्च = यज्ञदानतपांसि
योगश्च क्षेमं च अनयोः समाहारः = योगक्षेमम्
सृष्टिश्च स्थितिश्च लयश्च एतेषां समाहारः = सृष्टिस्थितिलयम्, तस्य

एतानि वाक्यानि सावधानं परिशीलयत –

१. **युधिष्ठिरार्जुनौ** पाण्डवेषु अन्यतमौ स्तः ।
२. **रागद्वेषौ** मानवं कलुषितं कुरुतः ।
३. **व्यासकण्वकपिलाः** मन्त्रवेत्तारः मुनयः ।
४. **हेमन्तशिशिरवसन्ताः** प्रमुखाः ऋतवः वर्तन्ते ।
५. **भरणीकृत्तिकारोहिण्यः** सप्तविंशत्यां नक्षत्रेषु अन्तर्भवन्ति ।
६. **व्याकरणनिरुक्तं** वेदाङ्गेषु अन्तर्भवति ।
७. कुरुक्षेत्रे **रथिकाश्वारोहं** युद्धम् अकरोत् ।
८. **उदरहृदयं** प्राणिनः प्रमुखम् अङ्गम् ।

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानां समस्तपदानां विग्रहवाक्यम् इदं भवति –

युधिष्ठिरश्च अर्जुनश्च = युधिष्ठिरार्जुनौ
रागश्च द्वेषश्च = रागद्वेषौ
व्यासश्च कण्वश्च कपिलश्च = व्यासकण्वकपिलाः
हेमन्तश्च शिशिरश्च वसन्तश्च = हेमन्तशिशिरवसन्ताः
भरणी च कृत्तिका च रोहिणी च = भरणीकृत्तिकारोहिण्यः
व्याकरणं च निरुक्तं च अनयोः समाहारः = व्याकरणनिरुक्तम्

रथिकाश्च अश्वारोहाश्च अनयोः समाहारः = रथिकाश्वारोहम्

उदरं च हृदयं च अनयोः समाहारः = उदरहृदयम्

इमानि द्वन्द्वसमासस्य उदाहरणानि ।

द्वन्द्वसमासः उभयपदार्थप्रधानः भवति । तत्र द्वयोः पदयोः बहूनां पदानां वा युगपत् समासः भवति ।

**द्वन्द्वसमासभेदाः**

**१. इतरेतरद्वन्द्वः –**

इतरेतरयोगे (मिलितानाम् एकस्मिन् अर्थे अन्वयः इतरेतरयोगः) वर्तमानं सुबन्तं समस्यते । सः इतरेतरद्वन्द्वः इति उच्यते ।

यथा –

हरिश्च हरश्च – हरिहरौ

हरिश्च हरश्च गुरुश्च – हरिहरगुरवः

माता च पिता च – मातापितरौ

रामश्च लक्ष्मणश्च भरतश्च शत्रुघ्नश्च – रामलक्ष्मणभरतशत्रुघ्नाः

इतरेतरयोगद्वन्द्वे समस्तपदे यदि द्वे पदे भवतः तर्हि समस्तपदं द्विवचनान्तं, यदि बहूनि पदानि भवन्ति तर्हि बहुवचनान्तं भवति ।

**२. समाहारद्वन्द्वः –**

समाहारो नाम समूहः । यत्र द्वयोः बहूनां वा समूहरूपेण भानं तत्र समाहारद्वन्द्वः ।

यथा –

पाणी च पादौ च एतेषां समाहारः पाणिपादम् ।

घटश्च पटश्च एतयोः समाहारः घटपटम् ।

संज्ञा च परिभाषा च एतयोः समाहारः संज्ञापरिभाषम् ।

विशेषः –

केषाञ्चित् पदानां तु समाहारद्वन्द्वसमासः नित्यः ।

**१. प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानां च**

प्राण्यङ्गानि – पाणी च पादौ च एतेषां समाहारः पाणिपादम् । (पाणिपादाः इति कदापि न सम्भवति ।)

तूर्याङ्गानि – मार्दङ्गिकाश्च पाणविकाश्च एतेषां समाहारः मार्दङ्गिकपाणविकम्

सेनाङ्गानि – रथिकाश्च अश्वारोहाश्च एतेषां समाहारः रथिकाश्वारोहम्

**२. येषां विरोधः शाश्वतिकः**

अहिश्च नकुलश्च अनयोः समाहारः अहिनकुलम्

गौश्च व्याघ्रश्च अनयोः समाहारः गोव्याघ्रम्

काकश्च उलूकश्च अनयोः समाहारः काकोलूकम्

समाहारद्वन्द्वे बहूनां पदानां समासेऽपि समस्तपदम् एकवचनान्तं नपुंसकलिङ्गं च भवति ।

यद्यपि अन्येषां केषाञ्चित् पदानां समाहारद्वन्द्वसमासः नित्यः तथापि अप्रसिद्धत्वात् तत्समासस्य विवरणं न कृतम्।

१४. ३. एतेषु अर्थेषु समस्तपदं लिखत –

१. आम्रश्च न्यग्रोधश्च ________________।
२. व्यासश्च कपिलश्च ________________।
३. धेनुश्च व्याघ्रश्च ________________।
४. छन्दः च साहित्यं च ________________।
५. इन्द्रश्च वायुश्च ________________।
६. चणकश्च गोधूमश्च ________________।
७. जैमिनिश्च कणादश्च विश्वामित्रश्च ________________।
८. पाणिनिश्च पतञ्जलिश्च ________________।

१४. ४. उचितेन पदेन रिक्तस्थानं पूरयत –

| | |
|---|---|
| १. रजकश्च तन्तुवायश्च | ________________ |
| २. __________ पिता च | मातापितरौ |
| ३. व्यासश्च भासश्च कालिदासश्च | ________________ |
| ४. घटश्च __________ | घटपटम् |
| ५. मार्जारश्च मूषकश्च | ________________ |
| ६. __________ ग्रीवा च | शिरोग्रीवम् |
| ७. गीता च सीता च लता च ललिता च | ________________ |
| ८. ________________ | रमेशदिनेशगणेशगोविन्दाः। |

१४. ५. एतेषु गीतावाक्येषु स्थूलाक्षरैः मुद्रितानां समस्तपदानां विग्रहवाक्यं लिखत –

१. नकुलः सहदेवश्च **सुघोषमणिपुष्पकौ**। (१.१६) ________________।
२. **सुखदुःखे** समे कृत्वा लाभालाभौ जयाजयौ। (२.३८) ________________।
३. **सांख्ययोगौ** पृथग्बालाः प्रवदन्ति न पण्डिताः। (५.४) ________________।
४. **विहारशय्यासनभोजनेषु**। (११.४२) ________________।
५. यावत्सञ्जायते किञ्चित्सत्त्वं **स्थावरजङ्गमम्**। (१३.२६) ________________।
६. न तदस्ति विना यत्स्यात् मया भूतम् **चराचरम्**। (१०.३९) ________________।
७. यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य **शुभाशुभम्**। (२.५७) ________________।
८. तेषां नित्याभियुक्तानां **योगक्षेमं** वहाम्यहम्। (९.२२) ________________।
९. **प्रमादमोहौ** तमसो भवतोऽज्ञानमेव च। (१४.१७) ________________।

**अव्ययीभावसमासः**

एतानि उदाहरणानि परिशीलयत –

**उपकृष्णं** गोपाः विलसन्ति ।
छात्रः **यथाशक्ति** अध्ययनं करोति ।
वस्तूनां मूल्यं **प्रतिदिनं** वर्धते ।
अभ्यागताः **अधिमञ्चं** विराजन्ते ।
वरः **अनुरूपां** कन्यां परिणयति ।

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानां समस्तपदानां विग्रहवाक्यम् इदं भवति –

कृष्णस्य समीपम् उपकृष्णम् ।
शक्तिम् अनतिक्रम्य यथाशक्ति ।
दिने दिने प्रतिदिनम् ।
रूपस्य योग्याम् अनुरूपाम् ।

एतानि सर्वाणि अव्ययीभावसमासस्य उदाहरणानि । अव्ययीभावसमासे पूर्वपदार्थः प्रधानः । अत्र समस्तपदे पूर्वपदं प्रायः अव्ययमेव भवति । विग्रहवाक्ये तस्य अर्थः निर्दिष्टो भवति ।

विभक्त्यर्थादिषु वर्तमानम् अव्ययं सुबन्तेन समस्यते ।

| | | |
|---|---|---|
| विभक्त्यर्थे | – हरौ इति | – अधिहरि |
| | – आत्मनि इति | – अध्यात्मम् |
| सामीप्यर्थे | – शम्भोः समीपम् | – उपशम्भु |
| | – राधायाः समीपम् | – उपराधम् |
| अर्थाभावार्थे | – मक्षिकाणाम् अभावः | – निर्मक्षिकम् |
| योग्यतार्थे | – रूपस्य योग्यम् | – अनुरूपम् |
| पदार्थानतिवृत्त्यर्थे | – शक्तिम् अनतिक्रम्य | – यथाशक्ति |
| | – बलम् अनतिक्रम्य | – यथाबलम् |

१४. ६. उचितेन पदेन रिक्तस्थानं पूरयत –

| | |
|---|---|
| १. विघ्नानाम् अभावः | ________ |
| २. ________ | यथाकालम् |
| ३. भागम् अनतिक्रम्य | ________ |
| ४. भित्तेः समीपम् | ________ |
| ५. ________ | उपनगरम् |
| ६. मासे मासे | ________ |
| ७. ________ | प्रतिराष्ट्रम् |

१४. ७. अत्र कानिचन चित्राणि वर्तन्ते । मञ्जूषायां प्रदत्तं सम्बद्धपदं चित्वा यथोदाहरणं समासोल्लेखं कुरुत -

| | सम्बद्धं पदम् | समासः |
|---|---|---|

रामायणकाव्यम्, उपनदि, गजाननः, नरसिंहः, सूर्योदयः, कुक्कुटमयूरौ, अहिनकुलम्, पार्वतीपरमेश्वरौ, कृष्णार्जुनौ ।

| | सम्बद्धं पदम् | समासः |
|---|---|---|
| उदा - | सूर्योदयः | षष्ठीतत्पुरुषः |
| १. | ________ | ________ |
| २. | ________ | ________ |
| ३. | ________ | ________ |
| ४. | ________ | ________ |
| ५. | ________ | ________ |
| ६. | ________ | ________ |
| ७. | ________ | ________ |
| ८. (रामायणम्) | ________ | ________ |

१४. ८. मञ्जूषायां विद्यमानानि पदानि तत्तत्समासस्तम्भे लिखत –

| | | | |
|---|---|---|---|
| उपनगरम् | मृगलोचना | तरुलते | ब्रह्मविष्णुमहेश्वराः |
| विशालाक्षी | महाबलः | चतुर्युगम् | पुरुषसिंहः |
| एकोनः | अधिकारिभयम् | कृष्णसर्पः | महर्षिः |
| मुखकमलम् | ग्रामगतः | राजपुरुषः | त्रिभुवनम् |
| पञ्चवटी | अष्टाध्यायी | लम्बकर्णः | यथाविधि |
| आयुरारोग्यैश्वर्याणि | उपोद्यानम् | हरिहरौ | निर्विघ्नम् |

| बहुव्रीहिः | तत्पुरुषः | द्वन्द्वः | अव्ययीभावः | कर्मधारयः | द्विगुः |
|---|---|---|---|---|---|
| | | | | | |

**अहं च त्वं च राजेन्द्र ! लोकनाथावुभावपि ।**
**बहुव्रीहिरहं राजन् षष्ठीतत्पुरुषो भवान् ॥**

कश्चन याचकः महाराजम् उद्दिश्य वदति – "हे महाराज ! भवान् लोकनाथः । अहमपि लोकनाथः । परन्तु भवान् लोकस्य नाथः । अतः लोकनाथः । भवतः विषये लोकनाथः इत्यत्र षष्ठीतत्पुरुषसमासः । अहं तु लोकः नाथः यस्य सः लोकनाथः । तन्नाम लोकः एव मम स्वामी । अतः मद्विषये लोकनाथः इत्यत्र बहुव्रीहिसमासः ।

# १५. बाणभूषणसंवादः

एतानि गीतावाक्यानि सावधानं परिशीलयत –

कर्मणि शानच्

प्रकृतेः **क्रियमाणानि** गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥ (३.२७)
न हन्यते **हन्यमाने** शरीरे । (२.२०)
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
**प्रोच्यमानम्** अशेषेण पृथक्त्वेन धनञ्जय ॥ (१८.२९)

एतेषु स्थूलाक्षरैः मुद्रितेषु पदेषु कर्मणि शानच्प्रत्ययस्य प्रयोगः कृतः अस्ति । वयम् अधुना तस्य ज्ञानं प्राप्नवाम –

एतत् सम्भाषणं सावधानम् उच्चैः पठत –

(चक्रवर्तिनः हर्षवर्धनस्य आस्थाने स्थितः बाणभट्टः संस्कृतभाषायाः सुप्रसिद्धः गद्यकविः । तेन प्रणीतं कादम्बरी हर्षचरितम् इति काव्यद्वयं संस्कृतगद्यसाहित्ये नितरां विख्यातम् । तत्रापि कादम्बरी बाणस्य कीर्तिम् अजरामराम् अकरोत् । कादम्बर्याः पूर्वभागः तेन विरचितः । ततः सः दिवङ्गतः । तस्य पुत्रः भूषणभट्टः तस्य अग्रिमं भागं लिखित्वा पित्रा उद्दिष्टं काव्यं समापितवान् । तयोः पितापुत्रयोः संवादः अत्र अस्ति ।)

भूषणभट्टः – तात ! भवता किं **लिख्यमानम्** अस्ति ?

बाणभट्टः – वत्स ! मया कादम्बरीनामको ग्रन्थः **लिख्यमानः** अस्ति ।

भूषणभट्टः – का कथा तत्र ?

बाणभट्टः – मया याः कथाः कथ्यमाना आसन् ताः त्वं जानास्येव । तासु अन्यतमा इदानीं काव्यरूपेण **प्रतिपाद्यमाना** अस्ति ।

भूषणभट्टः – कानि मुख्यपात्राणि तत्र ?

बाणभट्टः – गन्धर्वराजपुत्री महाश्वेता, तस्याः प्रियकरः पुण्डरीकः, राजकुमारः चन्द्रापीडः, तेन सदा **स्मर्यमाणा** कादम्बरी नाम गन्धर्वकन्या च – एते अत्र मुख्यभूमिकां वहन्ति।

भूषणभट्टः – तात ! भवता **क्रियमाणे** महाकार्ये अहं किं साहाय्यं करवाणि ?

बाणभट्टः – एवं कुरु। अहं कथयामि, मया **कथ्यमानं** सर्वं त्वं लिख।

भूषणभट्टः – एवमस्तु। भवता **निर्दिश्यमानं** कार्यम् अवश्यं मया क्रियते। अस्य काव्यस्य वैशिष्ट्यं किम् ?

बाणभट्टः – पात्रचित्रणे, वर्णने शब्दप्रयोगे च महत् वैशिष्ट्यं वर्तते। अत्र मया **सृज्यमानानि** पात्राणि लोके चिरकालं स्थास्यन्ति। मया **क्रियमाणं** वर्णनं काव्यप्रपञ्चे मम शाश्वतं स्थानं कल्पयिष्यति। **प्रयुज्यमाना** च भाषा आदर्शगद्यरूपा भविष्यति।

भूषणभट्टः – भवता **उच्यमानं** यदि शृणोमि तर्हि कदा तं ग्रन्थं पठेयम् इति उत्कण्ठा भवति मम।

बाणभट्टः – काव्यप्रियः चक्रवर्ती श्रीहर्षः अपि मया **लिख्यमानस्य** अस्य ग्रन्थस्य विषये मध्ये मध्ये पृच्छां करोति।

भूषणभट्टः – चक्रवर्तिना एवं **सत्क्रियमाणस्य** भवतः विषये वर्धते ममायम् आदरः।

बाणभट्टः – त्वमपि तथा प्रतिभावान् असि यत् काव्यप्रियैः सर्वदा **प्रशस्यमानः** भवसि।

भूषणभट्टः – भावयामि यत् मया **ध्यायमानः** महाकालः मां तथा अनुग्रहीष्यति इति।

बाणभट्टः – कः संशयः ? भक्तैः **अर्च्यमानः** देवः किं न दास्यति ? अवहितचित्तो भव। भगवन्तं शम्भुं स्तुवः।

**नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।**
**त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥**

(उन्नते शिरसि स्थितेन चन्द्ररूपेण चामरेण यः सुन्दरः अस्ति, यश्च त्रैलोक्यरूपस्य नगरस्य आरम्भे मूलस्तम्भः इव आचरति तस्मै परमेश्वराय नमः।)

एतानि वाक्यानि सावधानं परिशीलयत –

भवता किं **लिख्यमानम्** अस्ति ?
मया कथाः **कथ्यमानाः** सन्ति।
त्वया काव्यं **विरच्यमानम्** अस्ति।
अस्माभिः **ध्रियमाणानि** वस्त्राणि स्वच्छानि भवेयुः।
एतैः **अभिनीयमानं** नाटकं केन रचितम् ?
आरक्षकैः **ताड्यमानं** चोरं सः अपश्यत्।

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानि शानच्प्रत्ययान्तानि रूपाणि सन्ति। इतःपूर्वमपि शानच्प्रत्ययान्तान् शब्दान् वयं पठितवन्तः एव।

यथा –

भवान् देवं **प्रार्थयमानः** अस्ति।
शिष्याः गुरुं **वन्दमानाः** सन्ति।
वयं कष्टं **सहमानाः** भवेम।
शिशुः मातरं **वीक्षमाणः** अस्ति।
छात्रः ग्रन्थम् **अधीयानः** अस्ति।

**परन्तु एतेषु सर्वेषु वाक्येषु कर्तरि प्रयोगः अस्ति। तन्नाम कर्तरि यत् शानच् तदन्तानि पदानि अत्र प्रयुक्तानि सन्ति। कर्तरि इव कर्मणि अपि शानच्प्रत्ययो भवति। अस्मिन् पाठे कर्मणि शानच् प्रयुक्तः अस्ति। आत्मनेपदिभ्यः धातुभ्यः शानच्प्रत्ययः भवति, स च कर्तरि इति वयं पूर्वं ज्ञातवन्तः स्मः।**

यथा – कार्यक्रमः **प्रवर्तमानः** अस्ति।
शिशुः **एधमानः** अस्ति।
लता **कम्पमाना** अस्ति।
छात्राः **भाषमाणाः** सन्ति।

**परस्मैपदिभ्यस्तु धातुभ्यः शतृप्रत्ययः भवति।**

यथा – बालः **धावन्** अस्ति। छात्राः **पठन्तः** सन्ति।

परन्तु सर्वेभ्यः अपि सकर्मकधातुभ्यः कर्मणि शानच् प्रत्ययः भवति।

**परस्मैपदिभ्यः शानच्**

यथा – तेन फलम् **आनीयमानम्** अस्ति।
बालैः अभ्यासाः **लिख्यमानाः** सन्ति।
भवद्भिः श्लोकाः **गीयमानाः** सन्ति।
सर्वैः कार्याणि **क्रियमाणानि** भवन्तु।

**आत्मनेपदिभ्यः शानच्**

यथा – शिष्येण गुरुः **वन्द्यमानः** अस्ति।
भक्तैः देवः **सेव्यमानः** अस्ति।
बिडालेन मूषिकः **निरीक्ष्यमाणः** अस्ति।
देशभक्तैः कष्टानि **सह्यमानानि** भवन्ति।

## अभ्यासः

१५. १. यथोदाहरणं वाक्यद्वयं शानजन्तप्रयोगेण योजयित्वा एकं वाक्यं कुरुत –

यथा – तेन विषयः उच्यते । तं सर्वे शृण्वन्तु । **तेन उच्यमानं विषयं सर्वे शृण्वन्तु ।**

१. कविना काव्यं लिख्यते । तत् पठितुं जनाः उत्सहन्ते ।

______________________________ ।

२. राधया गीतं गीयते । तत् रसिकाः शृण्वन्ति ।

______________________________ ।

३. गोविन्देन फलं खाद्यते । तस्मिन् बीजानि सन्ति ।

______________________________ ।

४. गणेशेन वस्त्राणि क्रीयन्ते । तानि सुन्दराणि सन्ति ।

______________________________ ।

५. रामेण पाठः पठ्यते । तस्मिन् श्लोकाः सन्ति ।

______________________________ ।

६. आनन्देन कथा लिख्यते । तस्यां हास्यरसः अस्ति ।

______________________________ ।

७. मया कार्यं क्रियते । तस्य विघ्नं मा करोतु ।

______________________________ ।

८. बालिकया ग्रन्थः पठ्यते । तस्य नाम अहं न जानामि ।

______________________________ ।

९. भवता कार्यं क्रियते । तस्मात् कस्यापि हानिः नास्ति ।

______________________________ ।

१०. दुष्टैः सज्जनाः निन्द्यन्ते । ते खेदं प्राप्नुवन्ति ।

______________________________ ।

११. पितामहेन कथा कथ्यते । सा कुतूहलकरी आसीत् ।

_______________________________________________ ।

१२. शिशुना चाकलेहः खाद्यते । तम् एषः बलात् स्वीकृतवान् ।

_______________________________________________ ।

१३. तेन फलानि चीयन्ते । तानि भवती गृहं नयतु ।

_______________________________________________ ।

१४. कृषीवलेन कष्टं सह्यते । तस्य निवारणं करोतु ।

_______________________________________________ ।

१५. याचकेन धनिकः प्रार्थ्यते । तस्य नाम दयारामः ।

_______________________________________________ ।

विशेषसूचना –

**पुष्पेण विकस्यमानम् अस्ति ।**
**सिंहेन गर्ज्यमानम् अस्ति ।**
**लताभिः कम्प्यमानम् अस्ति ।**

इत्येवंप्रकारेण भावे अपि शानजन्तरूपाणां प्रयोगः भवति । परन्तु एतादृशाः प्रयोगाः विरलतया एव दृश्यन्ते । कर्मार्थकशानच्प्रत्ययान्तशब्दाः विशेषणानि भवन्ति । अतः तानि विशेष्यस्य लिङ्गं, वचनं, विभक्तिं च अनुसरन्ति ।

लिङ्गानुसरणं यथा –

१. छात्रैः अभ्यासः क्रियमाणः अस्ति । (पुंलिङ्गे)
२. छात्रैः पूजा क्रियमाणा अस्ति । (स्त्रीलिङ्गे)
३. छात्रैः भोजनं क्रियमाणम् अस्ति । (नपुंसकलिङ्गे)

वचनानुसरणं यथा –

१. मया श्लोकः लिख्यमानः अस्ति । (एकवचनम्)
२. मया श्लोकौ लिख्यमानौ स्तः । (द्विवचनम्)
३. मया श्लोकाः लिख्यमानाः सन्ति । (बहुवचनम्)

विभक्त्यनुसरणं यथा –

अस्माभिः ग्रन्थः पठ्यमानः अस्ति । (प्रथमाविभक्तिः)

भवता चिन्त्यमानं विषयं माम् अपि वदतु। (द्वितीयाविभक्तिः)
अस्माभिः प्राप्यमाणेन धनेन सन्तोष्टव्यम्। (तृतीयाविभक्तिः)
मया निर्दिश्यमानाय जनाय भवान् पुस्तकं ददातु। (चतुर्थीविभक्तिः)
तेन सूच्यमानात् आपणात् वस्तूनि आनयतु। (पञ्चमीविभक्तिः)
भवता निरूप्यमाणस्य काव्यस्य नायकः कः ? (षष्ठीविभक्तिः)
क्रियमाणे कार्ये श्रद्धा आवश्यकी। (सप्तमीविभक्तिः)

१५. २. आवरणे दत्तेन क्रियापदेन शानच्प्रत्ययान्तं निश्चित्य यथौचित्यं तेन रिक्तस्थानं पूरयत –

यथा – भवता **क्रियमाणस्य** कार्यस्य फलम् उत्तमं भवति। (क्रियते)

१. माधवेन ———————— क्षीरम् उष्णम् अस्ति। (पीयते)
२. शङ्करेण ———————— कथा प्रसिद्धा भविष्यति। (लिख्यते)
३. बालकेन ———————— चित्रे कः विशेषः अस्ति ? (दृश्यते)
४. तया ———————— ग्रन्थान् विद्यालये स्थापयतु। (दीयते)
५. गीतया ———————— सुभाषितं भवान् जानाति किम् ? (उच्यते)
६. जनन्या ———————— पुत्री खिन्ना अस्ति। (प्रेष्यते)
७. दूरदर्शने ———————— चित्रम् अहं न इच्छामि। (प्रदर्श्यते)
८. भक्तैः ———————— हरिकथा पापं नाशयति। (श्रूयते)
९. भवता ———————— संस्कृतकार्येण देशसेवा भवति। (क्रियते)
१०. गोविन्देन ———————— फलानाम् उत्पत्तिः कुत्र भवति ? (खाद्यते)
११. वैद्येन ———————— स्यूते औषधानि सन्ति। (नीयते)
१२. भवद्भिः ———————— धनेन कानि कार्याणि साधयितुं शक्यन्ते ? (प्राप्यते)
१३. भवता ———————— बालकात् अहं पुस्तकानि स्वीकरोमि। (निर्दिश्यते)
१४. मया ———————— कार्याय भवती समयं ददाति किम् ? (सूच्यते)
१५. बालैः ———————— उद्याने तरणतडागः अस्ति। (गम्यते)

# १६. भाषणपरिपाटी

एतां कथां सावधानं पठत –

कृत्प्रत्ययाः

पुरा नैमिषारण्ये कश्चन संन्यासी आसीत् । वार्द्धक्ये **वर्तमानः** सः केनचित् कारणेन अन्धः **संवृत्तः** । सः प्रतिदिनमपि आश्रमस्य पुरतः वृक्षमूले **उपविश्य ध्यानमग्नः** भवति स्म ।

अथ कदाचित् तत्र **आगतः** कश्चन पुरुषः तं मुनिं पृष्टवान् – "भोः संन्यासिन् ! अनेन मार्गेण **गन्तारः** केऽपि त्वया **दृष्टाः** किम् ?" इति । "नाहं जानामि" – इत्याह मुनिः प्रसन्नतया । तत् **वचनं श्रुत्वा** सः जनः ततो **निर्गतः** ।

किञ्चित्कालस्य पश्चात् अपरः कश्चित् तं मुनिम् **उपसृत्य** अपृच्छत् – "अये संन्यासिन् ! भवान् **विश्वसनीयः** इति भवन्तं **पृच्छन्** अस्मि । अधुना अनेन मार्गेण केऽपि **प्रयाताः** किम् ?" इति । तमुवाच स संन्यासी – "किञ्चित्पूर्वं कश्चित् एतदेव **पृष्ट्वा गतः** । ऋते तस्मात् किमपि न जानामि" इति ।

कतिपयेषु क्षणेषु गतेषु पुनः कश्चित् मुनिं **दृष्ट्वा** तत्समीपं **गत्वा** – "अये महात्मन् ! भवान् ध्यानमग्नः इति **जानन्** अपि 'मम कर्तव्यम् अवश्यं **निर्वहणीयम्** ; तत्र मया न **प्रमदितव्यम्** इति धिया प्रश्नकरणे **त्वरमाणः** अस्मि । अतो मां क्षाम्यतु भवान् । शत्रुसैनिकाः अत्र **सञ्चरन्तः** सन्तीति **श्रुतम्** । अतः तान् **अन्विष्यद्भिः** अस्माभिः अत्र **आगतम्** । तद्विषये भवान् किमपि जानीयात् इति भवन्तं पृच्छामि" इति अवदत् । तमपि स मुनिः पूर्ववदेव "नाहं जानामि" इति **कथयित्वा** पुनः ध्यानरतः अभवत् ।

ततः किञ्चित्कालः **अतीतः** । तदानीम् अपरः कश्चित् **आगत्य** मुनिं भक्त्या **प्रणम्य** अवोचत् – "अयि मुनिवर्य ! सादरं वन्दे । भवतः **दर्शनं प्राप्तं** यत् तत् जन्मान्तरीयसुकृतस्य फलमिति मन्ये । आशीर्भिः माम् अनुगृह्णातु । किञ्च मम **आगमने** कारणं **निवेदयितुम्** इच्छामि । अस्माकं **घातकाः**, सम्पदाम् **अपहारकाः** प्रजानां **पीडकाः** केचन शत्रुसैनिकाः एतं प्रदेशं प्राविशन् इति **गुप्तचरनेता** अवोचत् । तदत्र **आगतः** अस्मि । तत् कृपया तद्विषये यत् **ज्ञातं** तत् **वक्तव्यम्**" इति ।

तदा संन्यासी – "अयि महाराज ! विजयस्व । शत्रुसैनिकानां विषयः मया कोऽपि न ज्ञायते । यतोऽहम् अन्धः । एतावदेव जानामि यत् इतःपूर्वं कश्चन सैनिकः, **सेनानायकः** मन्त्री च माम् एतदेव अपृच्छन्, इदानीं तु स्वयं महाराजः भवान् पृच्छति" इति अवदत् । तत् **आकर्ण्य** राजा भृशं **विस्मयमानः** पुनः तम् अपृच्छत् – "अयि महात्मन् ! अन्धेनापि भवता आगतानाम् अस्माकम् **अभिज्ञानं** कथं **प्राप्तम्** ? किं भवतो दिव्यदृष्टिः अस्ति ?" इति । संन्यासी **हसन्** अब्रवीत् – "अत्र कापि दिव्यदृष्टिः नावश्यकी । तत्तस्य जनस्य **भाषणपरिपाटी** एव तस्य स्थानस्य योग्यतायाः च **ज्ञापिका** अभवत्" इति ।

तत् **श्रुत्वा** राजापि तद् वचनम् **अङ्गीकृत्य** पुनः तं **नमस्कृत्य** ततः अग्रे जगाम ।

अस्यां कथायाम् स्थूलाक्षरैः मुद्रितानि पदानि कृदन्तानि इति कथ्यन्ते । यतः एतेषाम् अन्ते विद्यमानस्य प्रत्ययस्य 'कृत्' – इति नाम । (कृत् अन्ते यस्य सः कृदन्तः) तव्यत् – अनीयर्, ण्वुल्, तृच्, क्त्वा, तुमुन्, ल्युट्, क्त, क्तवतु, शतृ, शानच् – एते प्रसिद्धाः व्यवहारे अत्यन्तम् उपयोगिनः च कृत्प्रत्ययाः । एतेषु तव्यत्, अनीयर्, क्त्वा, तुमुन्, क्त, क्तवतु, शतृ, शानच् – एते प्रत्ययाः विविधेषु प्रसङ्गेषु अस्माभिः ज्ञाताः एव ।

यथा –

कर्मचारिभिः समये कार्यालयः **गन्तव्यः** । (तव्यत्)
सर्वेणापि देशहितं **चिन्तनीयम्** । (अनीयर्)
सीतारामः चायं **पीत्वा** कार्यं करोति । (क्त्वा)
उद्यमपतिः वाणिज्यं **विस्तारयितुं** प्रवासं करोति । (तुमुन्)
तेन उचिता कार्ययोजना **कृता** । (क्त)
सुभाषिणी अद्य प्रशंसार्हं कार्यं **कृतवती** । (क्तवतु)
सैनिकाः देशरक्षणं **कुर्वन्तः** भवन्ति । (शतृ)
ज्वरबाधया तस्य शरीरं **कम्पमानम्** अस्ति । (शानच्)

इतरेषां केषाञ्चित् कृदन्तानां ज्ञानम् अधुना प्राप्नवाम –

एतानि गीतावाक्यानि सावधानं परिशीलयत –

१. आचार्यमुपसंगम्य राजा **वचनम्** अब्रवीत् । (१.२)
२. **नायका** मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते । (१.७)
३. **ज्ञानं विज्ञान**सहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् । (९.१)
४. गतिर्भर्ता (गतिः **भर्ता**) प्रभुः साक्षी निवासः शरणं सुहृत् । (९.१८)
५. वेत्तासि (**वेत्ता** असि) वेद्यं च परं च धाम । (११.३८)
६. **अधिष्ठानं** तथा **कर्ता करणं** च पृथग्विधम् । (१८.१४)
७. नैनं छिन्दन्ति शस्त्राणि नैनं दहति **पावकः** । (२.२३)
८. शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । (**आसनम्** आत्मनः) (६.११)

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रिताः सर्वेऽपि शब्दाः कृदन्ताः सन्ति । क्रमशः तेषां ज्ञानं प्राप्नवाम –

### अ) ण्वुल्प्रत्ययः

एतानि वाक्यानि सावधानं परिशीलयत –

अनूपजलोटः प्रसिद्धः **गायकः** ।
रमेशः महाविद्यालये **शिक्षकः** ।
देवः सर्वेषामपि अस्माकं **रक्षकः** ।

एतेषु वाक्येषु गायकः, शिक्षकः, रक्षकः – इत्येतानि पदानि 'ण्वुल्'प्रत्ययान्तानि । धातोः कर्ता इत्यर्थे ण्वुल्प्रत्ययः भवति । तस्य 'अक' इति आदेशो भवति । ततः एतानि रूपाणि सिध्यन्ति । तस्मात् प्रायः यत्र 'अक' इति श्रूयते सः 'ण्वुल्'प्रत्ययान्तः शब्दः इति वक्तुं शक्यते ।

एतान् ण्वुल्प्रत्ययान्तान् शब्दान् स्मरत –

गायति – गै + ण्वुल् (अक) – गायकः
नयति – नी + ण्वुल् (अक) – नायकः
वहति – वह् + ण्वुल् (अक) – वाहकः

| | | |
|---|---|---|
| रक्षति | – रक्ष् + ण्वुल् (अक) | – रक्षकः |
| अर्चति | – अर्च् + ण्वुल् (अक) | – अर्चकः |
| पचति | – पच् + ण्वुल् (अक) | – पाचकः |
| क्षिपति | – क्षिप् + ण्वुल् (अक) | – क्षेपकः |
| वीक्षते | – (वि) ईक्ष् + ण्वुल् (अक) | – वीक्षकः |
| गृह्णाति | – ग्रह् + ण्वुल् (अक) | – ग्राहकः |
| लिखति | – लिख् + ण्वुल् (अक) | – लेखकः |
| बाधते | – बाध् + ण्वुल् (अक) | – बाधकः |
| पृच्छति | – प्रच्छ् + ण्वुल् (अक) | – प्रच्छकः |
| पुष्णाति | – पुष् + ण्वुल् (अक) | – पोषकः |
| चालयति | – चालि + ण्वुल् (अक) | – चालकः |
| पाठयति | – पाठि + ण्वुल् (अक) | – पाठकः |
| प्रापयति | – (प्र) + आपि + ण्वुल् (अक) | – प्रापकः |
| परिवेषयति | – (परि) + वेषि + ण्वुल् (अक) | – परिवेषकः |
| परिशीलयति | – (परि)+ शीलि + ण्वुल् (अक) | – परिशीलकः |
| अध्यापयति | – (अधि) + आपि + ण्वुल् (अक) | – अध्यापकः |

(स्त्रीलिङ्गे एतान्येव पदानि गायिका, नायिका, वाहिका... इत्येवंरूपाणि भवन्ति। नपुंसकलिङ्गे तु वाहकम्, रक्षकम्, ग्राहकम् इत्येवंरूपाणि भवन्ति।)

### आ) तृच्प्रत्ययः

एतानि वाक्यानि सावधानं पठत –

१. ब्रह्मा जगतः **स्रष्टा** अस्ति।

२. शते जनेषु एकः **दाता** भवति।

३. तस्मिन् कार्यक्रमे एकः एव **श्रोता** आसीत्।

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानि पदानि 'तृच्'प्रत्ययान्तानि। अयं प्रत्ययः अपि कर्त्रर्थे भवति।

एतानि अवलोकयत –

| | | |
|---|---|---|
| १. सः दाता। | तौ दातारौ। | ते दातारः। |
| सः श्रोता। | तौ श्रोतारौ। | ते श्रोतारः। |

(पुंलिङ्गे ऋकारान्तस्य धातृशब्दस्य इव रूपाणि।)

| | | |
|---|---|---|
| २. सा दात्री। | ते दात्र्यौ। | ताः दात्र्यः। |
| सा श्रोत्री। | ते श्रोत्र्यौ। | ताः श्रोत्र्यः। |

(स्त्रीलिङ्गे ईकारान्तस्य नदीशब्दस्य इव रूपाणि।)

| | | |
|---|---|---|
| ३. तत् दातृ । | ते दातृणी । | तानि दातॄणि । |
| तत् श्रोतृ । | ते श्रोतृणी । | तानि श्रोतॄणि । |

(नपुंसकलिङ्गे ऋकारान्तस्य धातृशब्दस्य इव रूपाणि ।)

एतान् तृच्प्रत्ययान्तान् शब्दान् स्मरत –

| | | |
|---|---|---|
| शृणोति | – श्रु + तृच् | – श्रोता |
| करोति | – कृ + तृच् | – कर्ता (३.२४) |
| गच्छति | – गम् + तृच् | – गन्ता (२.५२) |
| पठति | – पठ् + तृच् | – पठिता |
| पृच्छति | – प्रच्छ् + तृच् | – प्रष्टा |
| ददाति | – दा + तृच् | – दाता |
| भुङ्क्ते | – भुज् + तृच् | – भोक्ता (९.२४) |
| धरति | – धृ + तृच् | – धर्ता |
| गायति | – गै + तृच् | – गाता |
| स्तौति | – स्तु + तृच् | – स्तोता |
| हन्ति | – हन् + तृच् | – हन्ता (२.१९) |
| लभते | – लभ् + तृच् | – लब्धा |
| अधीते | – (अधि) इ + तृच् | – अध्येता |
| विक्रीणीते | – (वि) क्री + तृच् | – विक्रेता |
| स्मरति | – स्मृ + तृच् | – स्मर्ता |
| चिनोति | – चि + तृच् | – चेता |
| प्रविशति | – (प्र) विश् + तृच् | – प्रवेष्टा |
| दधाति | – धा + तृच् | – धाता |
| जानाति | – ज्ञा + तृच् | – ज्ञाता |

१६. १. रिक्तानि स्थानानि पूरयत –

| यथा – | ______________ | ______________ | अध्यापिकाः |
|---|---|---|---|
| | **अध्यापिका** | **अध्यापिके** | **अध्यापिकाः** |
| १. | पोषकः | ______________ | ______________ |
| २. | ______________ | वक्तारौ | ______________ |
| ३. | ______________ | ______________ | बाधकानि |
| ४. | गन्तृ | ______________ | ______________ |
| ५. | ______________ | ______________ | ज्ञात्र्यः |

| | | | |
|---|---|---|---|
| ६. | ——————— | प्रेषके | ——————— |
| ७. | ——————— | ——————— | प्रष्टारः |
| ८. | ——————— | ——————— | प्रच्छिकाः |
| ९. | भोक्त्री | ——————— | ——————— |
| १०. | ——————— | प्रापके | ——————— |
| ११. | ——————— | कर्तृणी | ——————— |
| १२. | ——————— | ——————— | घातकाः |

१६. २. संयोजयत –

| | |
|---|---|
| यथा – १. देवता | नायिका |
| २. यानानि | स्तोत्र्यः |
| ३. रामः | पठितारौ |
| ४. महिले | रक्षिका |
| ५. गीता | परिशीलकः |
| ६. छात्रौ | गन्तॄणि |
| ७. ज्येष्ठः | पठित्र्यौ |
| ८. ताः | ज्ञाता |

१६. ३. उचितेन पदेन (ण्वुलन्तेन तृजन्तेन वा) वाक्यं पूरयत –

१. तत्र एकः एव ——————— (लिख् + ण्वुल् ) अस्ति।

२. नलभीमौ प्रसिद्धौ ———————। (पच् + ण्वुल्)

३. महाविद्यालये ——————— (पठ् + तृ) बालिकाः बह्व्यः सन्ति।

४. संस्कृतस्य वर्धने ———————(बाध् + ण्वुल्) समस्याः अस्माभिः परिहर्तव्याः।

५. बृहद्यानानि कदाचित् प्राणानाम् ———————(अप + हृ + ण्वुल्) भवन्ति।

६. बहवः ——————— राष्ट्रहितं न चिन्तयन्ति। (नी + तृ)

७. आवां सर्वदा अन्यैः कृतस्य उपकारस्य ——————— (स्मृ + तृ) भवावः।

८. नृत्यकार्यक्रमे द्वे बाले एव ———————(वि +ईक्ष् + ण्वुल् ) आस्ताम्।

९. मातापितरौ एव शिशोः उत्तमौ ——————— (पाल् + ण्वुल्) भवतः।

१०. मम द्वे पुत्र्यौ अपि संस्कृतस्य ——————— (अधि + इ + तृ) स्तः।

११. समाजस्य ——————— (उत् + धृ + तृ) जनमानसे सर्वदापि निवसन्ति।

१२. अप्रियस्य च पथ्यस्य ——————— (वच् + तृ) ——————— (श्रु + तृ) च दुर्लभः।

१६. ४. एतेषु श्लोकेषु विद्यमानान् ण्वुलन्तान् तृजन्तान् च शब्दान् संगृह्णीत –

१. जनिता चोपनेता च यश्च विद्यां प्रयच्छति । ________ ________
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ ________ ________

२. कर्ता कारयिता चैव प्रेरकश्चानुमोदकः । ________ ________
सुकृते दुष्कृते चैव चत्वारः सहभागिनः ॥ ________ ________

३. दारको यातुधानानां तारको भववारिधेः । ________ ________
पालको जीवजातस्य नायको जयताद्धरिः ॥ ________ ________

४. कारको जीववृन्दस्य दायकः सर्वसम्पदाम् । ________ ________
सर्जको गुणगुम्फानां रक्षको जयताद्धरः ॥ ________ ________

५. पाठकः सर्वविद्यानां दायको गुणसम्पदः । ________ ________
पावकः सर्वदोषाणां वाहको जयताद् गुरुः ॥ ________ ________

सर्वेभ्योऽपि धातुभ्यः ण्वुल्–तृच्प्रत्ययौ भवतः ।

यथा – नी – नायकः, नेता
रक्ष् – रक्षकः, रक्षिता
प्रच्छ् – प्रच्छकः, प्रष्टा

परन्तु केचन धातवः अनयोः एकेन एव प्रत्ययेन युक्ताः प्रसिद्धाः सन्ति ।

| यथा – | | प्रसिद्धः | अप्रसिद्धः |
|---|---|---|---|
| | श्रु | श्रोता (तृच्) | श्रावकः (ण्वुल्) |
| | स्तु | स्तोता (तृच्) | स्तावकः (ण्वुल्) |
| | अर्च | अर्चकः (ण्वुल्) | अर्चिता (तृच्) |
| | पच् | पाचकः (ण्वुल् ) | पक्ता (तृच्) |

अतः व्यवहारे ये प्रसिद्धाः तेषाम् एव अधिकतया प्रयोगः भवतु । अप्रसिद्धानां प्रयोगे अपि न दोषः इति तु स्मर्तव्यम् ।

इ) ल्युट्प्रत्ययः

एतानि वाक्यानि सावधानं पठत –

१. गीतायाः **पठनं** मम दैनन्दिनं कार्यम् ।
२. अस्माभिः संस्कृतस्य **रक्षणं** करणीयम् ।
३. देवः साधूनां **परित्राणाय** युगे युगे अवतरति ।
४. तस्य गीतस्य **श्रवणेन** आनन्दः जातः ।
५. भारतीयसंस्कृतेः **अध्ययने** आसक्ताः बहवः सन्ति ।

एतेषु स्थूलाक्षरैः मुद्रितानि पदानि परिशीलयत । एतादृशानि बहूनि पदानि अस्माभिः प्रयुज्यन्ते । एते 'ल्युट्'प्रत्ययान्ताः

शब्दाः। धातोः भावार्थे अयं प्रत्ययः भवति। तस्य 'अन' इति आदेशः भवति। अतः यत्र ल्युट्प्रत्ययः तत्र सर्वत्रापि 'अन' इति श्रूयते। एवं ल्युट्प्रत्ययम् अभिज्ञातुं शक्नुमः। तत्प्रत्ययान्तः शब्द सर्वदा नपुंसकलिङ्गः भवति।

एतत् सावधानम् अवलोकयत –

| | | |
|---|---|---|
| पठति | – पठ् + ल्युट् (अन) | – पठनम् |
| रक्षति | – रक्ष् + ल्युट् (अन) | – रक्षणम् |
| शृणोति | – श्रु + ल्युट् (अन) | – श्रवणम् |
| स्थापयति | – स्थापि + ल्युट् (अन) | – स्थापनम् |
| परिशीलयति | – (परि)+ शीलि + ल्युट् (अन) | – परिशीलनम् |

१६. ५. यथोदाहरणं ल्युट्प्रत्ययान्तेन शब्देन रिक्तस्थानानि पूरयत –

| | | |
|---|---|---|
| यथा – **स्मरति** | **– स्मृ + ल्युट् (अन)** | **= स्मरणम्** |
| १. स्तौति | – ________ + ________ | = ____________ |
| २. गच्छति | – ________ + ________ | = ____________ |
| ३. क्रीडति | – ________ + ________ | = ____________ |
| ४. तरति | – ________ + ________ | = ____________ |
| ५. वक्ति | – ________ + ________ | = ____________ |
| ६. चिन्तयति | – ________ + ________ | = ____________ |
| ७. अपहरति | – ________ + ________ | = ____________ |
| ८. उत्तिष्ठति | – ________ + ________ | = उत्थानम् |
| ९. परिवेषयति | – ________ + ________ | = ____________ |
| १०. उद्धरति | – ________ + ________ | = ____________ |

१६. ६. यथोदाहरणं रिक्तानि स्थानानि पूरयत –

| | | |
|---|---|---|
| उदा – | – **परित्रायते +(परि) त्रै +ल्युट् (अन)** | **= परित्राणम्** |
| | – ________ + ________ + ________ | = दर्शनम् (११.१०) |
| | – ________ + ________ + ________ | = दानम् (१७.७) |
| | – ________ + ________ + ________ | = आराधनम् (७.२२) |
| | – ________ + ________ + ________ | = ध्यानम् (१२.१२) |
| | – ________ + ________ + ________ | = प्रयाणम् (प्रयाणकाले) (८.१०) |
| | – ________ + ________ + ________ | = मरणम् (मरणात्) (२.३४) |
| | – ________ + ________ + ________ | = संन्यसनम् (संन्यसनात् ) ३.४ |
| | – ________ + ________ + ________ | = अर्पणम् (४.२४) |

१६. ७. एतयोः श्लोकयोः विद्यमानानि ल्युट्प्रत्ययान्तानि संगृह्णीत –

१. पूर्वं रामतपोवनाभिगमनं हत्वा मृगं काञ्चनम्
वैदेहीहरणं जटायुमरणं सुग्रीवसम्भाषणम् ।
वालीनिग्रहणं समुद्रतरणं लङ्कापुरीदाहनम्
पश्चाद्रावणकुम्भकर्णहननमेतद्धि रामायणम् ॥[१]

२. आदौ देवकिदेविगर्भजननं गोपीगृहे वर्धनं
मायापूतनिजीवितापहरणं गोवर्धनोद्धारणम् ।
कंसच्छेदनकौरवादिहननं कुन्तीप्रजापालनं
एतद्भागवतं पुराणकथितं श्रीकृष्णलीलामृतम् ॥[१]

ल्युट्प्रत्ययः करणम् – अधिकरणम् – अनयोरपि अर्थयोः भवति ।

करणार्थे – यथा – १. नाशनम् – नाश्यते अनेन इत्यर्थः (नाशि + ल्युट्) ज्ञानविज्ञाननाशनम् (३.४१)

२. घ्राणम् – घ्रायते अनेन इत्यर्थः (घ्रा + ल्युट्) घ्राणम् (१५.९)

अधिकरणार्थे – यथा – १. आसनम् –आस्यते अत्र (आस् + ल्युट्) आसनम् (६.११)

बहुव्रीहिसमासे ल्युट्प्रत्ययान्तः शब्दः अपि विशेष्यस्य लिङ्गं प्राप्नोति । अतः ल्युडन्तः नपुंसकलिङ्गः इति कथनं बहुव्रीहिसमासे न अन्वेति ।

यथा – १. कर्म बन्धनं यस्य सः कर्मबन्धनः । लोकोऽयं कर्मबन्धनः । (३.९)

२. महत् अशनं यस्य सः – महाशनः । महाशनो महापाप्मा । (३.३७)

अत्रत्यानि कृदन्तरूपाणि संगृह्णीत –

जगतः स्रष्टा ब्रह्मा सर्जनस्य पश्चात् कदाचित् मनुष्यं स्वसमीपम् आहूय "भवान् किम् इच्छति ?" इति पृष्टवान् । तदा मनुष्यः "अहं ससन्तोषं जीवितुम् इच्छामि । मम जीवनं सुखान्वितं शान्तिमयं च भवेत् । तथा माम् अनुगृह्णातु" इति उक्तवान् ।

ततो ब्रह्मा तस्मै स्यूतद्वयं दत्त्वा आह– "एतत् गृह्यताम् । अत्र एकस्मिन् स्यूते अन्येषां दुर्गुणाः सन्ति । अयं स्यूतः सर्वदा भवतः पृष्ठतः एव स्थापनीयः । कदापि न उद्घाटनीयः द्रष्टव्यः च । द्वितीये भवदीयाः दुर्गुणाः सन्ति । तं स्यूतं सर्वदा पुरतः एव स्थापयतु । पुनः पुनः उद्घाट्य पश्यन् भवतु" इति ।

तदा मनुष्यः नितान्तं मोदमानः ब्रह्माणं प्रणम्य स्यूतद्वयमपि आदाय प्रस्थितः । परन्तु तयोः निवेशने प्रमादः सञ्जातः । यत्र स्वकीयाः दुर्गुणाः आसन् स स्यूतः पृष्ठतः स्थापितः । यत्र च परेषां दुर्गुणाः, स पुरतः स्थापितः । अतः सः पृष्ठतः विद्यमानं स्यूतं कदापि न उदघाटयत् । पुरतः स्थितं तु पुनः पुनः उद्घाट्य दृष्टवान् । अन्येभ्यः दर्शितवान् च ।

अतः एव मनुष्यः इदानीमपि स्वकीयस्य दुर्गुणस्य न्यूनतायाश्च चिन्तनं कदापि न करोति । सर्वदापि अन्येषां दोषान् विलोक्य तेषां कथने विमर्शने उपहसने च रतः भवति । यः सर्वदापि परदोषद्रष्टा भवति सः सुखं शान्तिं च अलभमानः अन्यानपि पीडयन् निरर्थकं जीवति ।

१. यद्यपि एतयोः श्लोकयोः बहवः दोषाः सन्ति,तथापि अन्यन्तं प्रसिद्धौ इति, ल्युडन्तरूपाणि बहूनि सन्ति इति च हेतोः अत्र उदाहृतौ ।

# १७. ज्ञानं विज्ञानसहितम्

एतानि गीतावाक्यानि सावधानं पठत -

सन्नन्ताः

१. धर्मक्षेत्रे कुरुक्षेत्रे समवेता **युयुत्सवः** । (१.१)
२. दृष्ट्वेमं स्वजनं कृष्ण **युयुत्सुं** समुपस्थितम् । (१.२८)
३. कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् । (३.२५)
(कुर्यात् विद्वान् तथा असक्तः **चिकीर्षुः** लोकसंग्रहम् ।)
४. आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । (६.३)
(**आरुरुक्षोः** मुनेः योगं कर्म कारणमुच्यते ।)
५. जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते । (६.४४)
(**जिज्ञासुः** अपि योगस्य शब्दब्रह्मातिवर्तते ।)

एतेषां विग्रहवाक्यम् इदं भवति -

युयुत्सवः - योद्धुम् इच्छवः
युयुत्सुम् - योद्धुम् इच्छुः, तम्
आरुरुक्षोः - आरोढुम् इच्छुः, तस्य
जिज्ञासुः - ज्ञातुम् इच्छुः

एतत् सम्भाषणम् उच्चैः पठत -

छात्रः - गुरो ! अहं विज्ञानं **पिपठिषामि** । कृपया मां बोधयतु ।

आचार्यः - वत्स ! किमर्थं भवान् शास्त्रं विहाय आधुनिकविषयं **पिपठिषति** ?

छात्रः - गुरो ! यद्यपि विज्ञानम् आधुनिकविषयः इति प्रसिद्धः, तथापि अस्माकम् ऋषयः अपि वैज्ञानिकाः एव आसन् खलु ? अतः **जिज्ञासे** ।

आचार्यः - यदि भवान् **शुश्रूषते** तर्हि अहं तुभ्यं प्राचीनानाम् ऋषीणां योगदानं किमिति **विवदिषामि** ।

छात्रः - गुरुवर्य ! कृपया विवृणोतु ।

आचार्यः - विज्ञानं नाम यत्किञ्चिद्वस्तुनि सूक्ष्मं ज्ञानम् । बुद्धिशक्तेः, विवेकस्य, सदसदोः गुणदोषाणां च निर्धारणे सामर्थ्यं विज्ञानमिति वक्तुं शक्यते । बहवः ऋषयः वैज्ञानिकाः एव आसन् ।

छात्रः - ते के ?

आचार्यः - आर्यभटः, भास्करः, गौतमः, कणादः, भारद्वाजः, चरकः, सुश्रुतः इत्यादयः । एतैः खगोल-गणित-आयुर्वेदशिल्पशास्त्रादिषु ग्रन्थाः रचिताः ।

छात्रः - आर्यभटस्य विषयं मां किञ्चित् विवृणोति किम् ?

आचार्यः - कुतो न ? आर्यभटः खगोलशास्त्रज्ञः । तदीये आर्यभटीये ग्रन्थे वृत्तगणनम्, त्रिकोणमितिः, ग्रहसञ्चारः, परिधिः, क्षेत्रव्यवहारः, कालस्य विविधघट्टाः भूमण्डलस्य स्वरूपम् इत्यादयः बहवो विषयाः समुपवर्णिताः सन्ति ।

छात्रः – वैद्यकीये अपि बहवः परिश्रमम् अकुर्वन् इति श्रूयते । किं तत् सत्यम् ?

आचार्यः – सत्यम् । चरकसुश्रुतादयः तत्काले एव शस्त्रचिकित्साविधानं प्रतिपादितवन्तः । सुश्रुतसंहितायां छेद्यः भेद्यः लेख्यः वेध्यः, एष्यः, आहार्यः, विस्राव्यः सीव्यश्चेति अष्टविधाः शस्त्रचिकित्साक्रमाः निरूपिताः वर्तन्ते । सुश्रुतः सुनम्यचिकित्सा–(प्लास्टिक्सर्जरि)कर्मणि निपुणः आसीत् । वेदपुराणेष्वपि वैद्यकीयायुर्वेदप्राणिविज्ञानमनोविज्ञानादयः विषयाः वर्तन्ते ।

शिष्यः – आचार्य ! विज्ञानं **पिपठिषुः, जिज्ञासुश्च** अस्मि । कृपया मां बोधयतु ।

गुरुः – ज्ञानविज्ञानयोः अध्ययनं सर्वेणापि अवश्यं कर्तव्यमेव । यदि भावान् इच्छति तर्हि **उपदिदिक्षामि** । त्यजतु चिन्ताम् ।

एतस्मिन् सम्भाषणे स्थूलाक्षरैः मुद्रितानां पदानां विग्रहवाक्यम् अधः लिखितम् अस्ति । पुरतः स्थिते रिक्तस्थाने तानि पदानि यथोदाहरणं लिखत –

उदा. – पठितुम् इच्छामि पिपठिषामि ।

१. पठितुम् इच्छति ________ ।

२. ज्ञातुम् इच्छामि ________ ।

३. श्रोतुम् इच्छति ________ ।

४. वदितुम् इच्छामि ________ ।

५. पठितुम् इच्छुः ________ ।

६. ज्ञातुम् इच्छुः ________ ।

७. उपदेष्टुम् इच्छामि ________ ।

एतस्मिन् सम्भाषणे पूर्वतनेषु गीतावाक्येषु च स्थूलाक्षरैः मुद्रितानि सन्प्रत्ययान्तानि पदानि सन्ति । अधुना वयं सन्नन्तानां ज्ञानं प्राप्नवाम –

धातोः इच्छार्थे सन्प्रत्ययः भवति ।

यथा –

पठ् सन् (ततः पठ् इत्यस्य द्वित्वं भवति । पठ् पठ् सन् – ततः शिष्टायां प्रक्रियायां कृतायां पिपठिषति इति रूपं सिध्यति ।)

जानीत –

**पठ्धातोः सन्प्रत्यये लट्लकारे इमानि रूपाणि भवन्ति –**

| | | |
|---|---|---|
| पिपठिषति | पिपठिषतः | पिपठिषन्ति |
| पिपठिषसि | पिपठिषथः | पिपठिषथ |
| पिपठिषामि | पिपठिषावः | पिपठिषामः |

पठितुम् इच्छा इत्यर्थे पिपठिषा, पठितुम् इच्छुः इत्यर्थे पिपठिषुः इति च रूपम् ।

एतानि पदानि सम्यक् परिशीलयत –

| → | इच्छति | इच्छा | इच्छुः |
|---|---|---|---|
| पठितुम् | पिपठिषति | पिपठिषा | पिपठिषुः |
| कर्तुम् | चिकीर्षति | चिकीर्षा | चिकीर्षुः |
| मोक्तुम् | मुमुक्षति | मुमुक्षा | मुमुक्षुः |
| खादितुम् | चिखादिषति | चिखादिषा | चिखादिषुः |
| वदितुम् | विवदिषति | विवदिषा | विवदिषुः |
| वक्तुम् | विवक्षति | विवक्षा | विवक्षुः |
| पातुम् | पिपासति | पिपासा | पिपासुः |
| दातुम् | दित्सति | दित्सा | दित्सुः |
| जेतुम् | जिगीषति | जिगीषा | जिगीषुः |
| योद्धुम् | युयुत्सति | युयुत्सा | युयुत्सुः |
| लब्धुम् | लिप्सति | लिप्सा | लिप्सुः |
| ज्ञातुम् | जिज्ञासते | जिज्ञासा | जिज्ञासुः |
| श्रोतुम् | शुश्रूषते | शुश्रूषा | शुश्रूषुः |
| द्रष्टुम् | दिदृक्षते | दिदृक्षा | दिदृक्षुः |
| वन्दितुम् | विवन्दिषते | विवन्दिषा | विवन्दिषुः |
| वर्धितुम् | विवर्धिषते | विवर्धिषा | विवर्धिषुः |

**विशेषः – जिज्ञासते, शुश्रूषते, दिदृक्षते, विवन्दिषते विवर्धिषते इत्येषां तु आत्मनेपदान्तानाम् इमानि रूपाणि भवन्ति ।**

| यथा – | जिज्ञासते | जिज्ञासेते | जिज्ञासन्ते |
|---|---|---|---|
| | जिज्ञाससे | जिज्ञासेथे | जिज्ञासध्वे |
| | जिज्ञासे | जिज्ञासावहे | जिज्ञासामहे |

१७. १. यथोदाहरणं वाक्यानि परिवर्तयत –

उदा – **बालः सन्देशं पठितुम् इच्छति – बालः सन्देशं पिपठिषति ।**

१. ते सेवां कर्तुम् इच्छन्ति ।

———————————————————————————— ।

२. भवन्तः किमपि वक्तुम् इच्छन्ति किम् ?

———————————————————— ।

३. त्वं स्वादुफलं खादितुम् इच्छसि खलु ?

———————————————————— ।

४. वयं विश्वं जेतुम् इच्छामः ।

———————————————————— ।

५. यूयम् उत्तरं ज्ञातुम् इच्छथ ।

———————————————————— ।

६. के योद्धुम् इच्छन्ति ?

———————————————————— ।

७. तापसाः मोक्षं लब्धुम् इच्छन्ति ।

———————————————————— ।

८. अर्जुनः ऐश्वरं रूपं द्रष्टुम् इच्छति ।

———————————————————— ।

९. अहं जलं पातुम् इच्छामि ।

———————————————————— ।

१०. वयं शतं वर्षाणि जीवितुम् इच्छामः ।

———————————————————— ।

**अवधेयम्**

मुमुक्षुः, दिदृक्षुः इत्येतादृशानां प्रयोगे कर्मपदात् द्वितीयाविभक्तिः भवति ।
यथा –

जलं पिपासुः बालः तिष्ठति ।
प्रियं चिकीर्षवः जनाः स्तुवन्ति ।

| | |
|---|---|
| जलस्य पिपासुः । ✗ | जलं पिपासुः । ✓ |
| संस्कृतस्य जिज्ञासवः । ✗ | सस्कृतं जिज्ञासवः । ✓ |
| युद्धस्य चिकीर्षुः । ✗ | युद्धं चिकीर्षुः । ✓ |

१७. २. आवरणे सूचिते अर्थे सन्नन्तं रिक्ते स्थाने लिखत –

१. —————— पाण्डवाः समागताः । (योद्धुम् इच्छवः)

२. विश्वरूपं —————— अर्जुनाय भगवान् दिव्यं चक्षुः अददात् । (द्रष्टुम् इच्छवे)

३. अहं धार्तराष्ट्रस्य प्रियं ------------------ निरीक्षे। (कर्तुम् इच्छून्)

४. ------------------ पूर्वजैः यथा कृतं तथा कुरु। (मोक्तुम् इच्छुभिः)

५. अहं ------------------ नीतिः अस्मि।(जेतुम् इच्छूनाम्)

१७. ३. उदाहरणं दृष्ट्वा त्रीणि वाक्यानि रचयत -

उदा - सः पाठं पठितुम् इच्छति।

१. सः पाठं पिपठिषति।
२. सः पाठं पिपाठिषुः अस्ति।
३. तस्य पाठस्य पिपाठिषा अस्ति।

१. ते संस्कृतकार्यं कर्तुम् इच्छन्ति।

------------------------------------------------ ।

------------------------------------------------ ।

------------------------------------------------ ।

२. अहं गणितम् पठितुम् इच्छामि।

------------------------------------------------ ।

------------------------------------------------ ।

------------------------------------------------ ।

३. यूयं विश्वं जेतुम् इच्छथ किम् ?

------------------------------------------------ ।

------------------------------------------------ ।

------------------------------------------------ ।

४. वयं सत्यं वक्तुम् इच्छामः।

------------------------------------------------ ।

------------------------------------------------ ।

------------------------------------------------ ।

१७. ४. कोष्ठके स्थितेन पदेन उचितविभक्त्यन्तेन वाक्यं पूरयत –

जिजीविषा, युयुत्सा, दिदृक्षा, पिपठिषा, बुभुक्षा, जिगीषा, लिप्सा

उदा – छात्रः जिज्ञासया पठति ।

१. कृषीवलाः उत्तमफलस्य ———————— कृषिं कुर्वन्ति ।

२. अर्जुनस्य ———————— सत्यां कृष्णः विश्वरूपं दर्शितवान् ।

३. कौरवाः पाण्डवाः च ————————कुरुक्षेत्रम् आगताः ।

४. सैनिकाः ———————— युद्ध्यन्ते ।

५. छात्राणां ———————— ज्ञात्वा आचार्यः नितरां तुष्टः ।

६. ते ———————— शमनाय खादन्ति ।

७. सर्वे ———————— एव कार्यं कुर्वन्ति ।

१७. ५. अधः निर्दिष्टानां शब्दानां सूचितविभक्त्यन्तरूपाणि लिखत –

(आवरणे विभक्तिः संख्यया सूचिता अस्ति ।)

| | | | | |
|---|---|---|---|---|
| पिपासुः | (६) | पिपासोः | पिपास्वोः | पिपासूनाम् |
| जिज्ञासा | (३) | ———— | ———— | ———— |
| पिपठिषुः | (४) | ———— | ———— | ———— |
| चिकीर्षुः | (१) | ———— | ———— | ———— |
| युयुत्सुः | (२) | ———— | ———— | ———— |
| जिजीविषुः | (५) | ———— | ———— | ———— |

**प्रवर्तनार्थमारम्भे मध्ये त्वौषधहेतवे ।**
**बहुमानार्थमन्ते च जिहीर्षन्ति चिकित्सकाः ॥**

वैद्याः चिकित्सायाः आरम्भं कर्तुम् आदौ धनम् अपेक्षन्ते । चिकित्सायाः मध्ये औषधस्य हेतोः धनम् अपहर्तुम् इच्छन्ति । चिकित्सा यदा समाप्ता भवति तदा तु बहुमानार्थं पुनः धनम् अपहर्तुम् इच्छन्ति । एवं च वैद्याः सर्वदा अपि रोगिणां धनम् अपहर्तुमेव इच्छन्ति ।

(अस्मिन् श्लोके सन्नन्तं पदं किमिति जानीत ।)

# १८. कर्मण्येवाधिकारस्ते

कारकम्

शिवरामः कश्चन छात्रः । परीक्षायां राज्ये प्रथमं स्थानं प्राप्तवन्तं तम् अभिनन्दति कश्चन पत्रकारः । तयोः साक्षात्कारः अत्र अस्ति । एतत् सम्भाषणं सावधानं पठत –

पत्रकारः – भोः शिवराम, अभिनन्दनम् ! भवान् लघुतमे ग्रामे दुर्गापुरे पठन् दशम्याः कक्ष्यायाः परीक्षायां समग्रस्य राज्यस्य छात्रेषु **सर्वप्रथमस्थानं** प्राप्तवान् । किं भवता तत् प्रतीक्षितम् आसीत् ?

शिवरामः – नैव । यतः **कर्मणि** एव अस्माकम् अधिकारः । जीवने फलस्य अपेक्षां विना कार्यं करणीयम् इति अस्माकम् अध्यापकाः सर्वदा बोधयन्ति । 'कर्मण्येवाधिकारस्ते' इति अस्माकं विद्यालयस्य ध्येयवाक्यम् अपि अस्मान् तत् स्मारयति ।

पत्रकारः – साधु साधु । भवतः यशः श्लाघनीयम् । भवता एतत् कथं सम्पादितम् ?

शिवरामः – मम यशसि मदपेक्षया अन्ये एव अधिकं कारणीभूताः इति अहं भावयामि ।

पत्रकारः – भवान् परिश्रमेण पठितवान्, **परीक्षायां** सम्यक् लिखितवान् । एवं सति यशसि तु भवान् एक एव कारणं खलु ?

शिवरामः – न, महोदय ! एतादृशयशःप्राप्तौ त्रयः अंशाः कारणीभूताः इति अस्माकम् अध्यापकाः बोधयन्ति ।

पत्रकारः – के ते त्रयः अंशाः ?

शिवरामः – ते सन्ति परीक्षासज्जता, परीक्षालेखनम्, उत्तरपत्रमूल्याङ्कनप्रक्रिया च । एतेषु उत्तरपत्रमूल्याङ्कनप्रक्रिया तु अस्मदधीना न भवति ।

पत्रकारः – **सर्वैः** ज्ञातः विषयः एषः । अस्तु । परीक्षासज्जता तु भवता एव कृता खलु ?

शिवरामः – यद्यपि तथा दृश्यते तथापि तत्रापि बहूनां साहाय्यम् आसीत् । **शिक्षकाः** आवर्षं प्रीत्या बोधितवन्तः, पठितुं प्रेरितवन्तः, मार्गदर्शनं च कृतवन्तः । मम सहाध्यायिनः अपि मया सह पठितवन्तः, चर्चां कृतवन्तः, यथोचितं च क्रीडितवन्तः । मम मद्गृहीयाः अपि पठनानुकूलं, सन्तोषकरं च वातावरणं कल्पितवन्तः, परीक्षायाः पूर्वं मासद्वयं **दूरदर्शनं** केनापि न प्रवर्तितमेव । अहं तु कञ्चित् परिश्रमं कृतवान् इति तु सत्यम् ।

पत्रकारः – प्रशंसनीयाः भवतः शिक्षकाः, सहपाठिनः गृहीयाश्च । साधु, द्वितीयः अंशः अस्ति परीक्षालेखनम् । परीक्षालेखनं तु पूर्णतया भवता एव कृतं खलु ?

शिवरामः – न श्रीमन् ! परीक्षालेखनेऽपि बहूनां साहाय्यम् आसीत् ।

पत्रकारः – एवम् !

शिवरामः – आम् । **परीक्षादिने** विद्यालये कर्मकराणां परीक्षानिर्वाहकाणां चापि साहाय्यं प्राप्तम् । कर्मकरैः परीक्षाप्रकोष्ठानां स्वच्छता कृता, आसनव्यवस्था च कल्पिता । परीक्षानिर्वाहकैः प्रश्नपत्रिकाः उत्तरपत्रिकाश्च समये वितीर्णाः । परीक्षासमये एकैकः क्षणः अपि महत्त्वपूर्णः आसीत् । समये उत्तराणि स्फुरितानि,

अहम् उत्तरपत्रिकां सम्यक् लिखितवान् इत्येषः भगवतः अनुग्रहः एव ।

पत्रकारः – भवान् परीक्षायां यशस्वी अस्ति एव । एतादृशेन **चिन्तनेन** जीवनेऽपि यशस्वी भविष्यति । पुनश्च अभिनन्दनम् ।

शिवरामः – धन्यवादः ।

पत्रकारः – (प्रधानाचार्यम् उद्दिश्य) मान्यवर ! भवान् धन्यः, यतः भवदीयाः अध्यापकाः छात्रान् सम्यक् बोधयन्ति, पठने चिन्तने च तान् प्रेरयन्ति । भवान् शुभावसरेऽस्मिन् ज्ञानामृतपूर्णैः वचनैः अनुगृह्णातु कृपया ।

प्रधानाचार्यः– किमन्यत् वदानि, अस्माकं विद्यालयस्य ध्येयवाक्यं यत्र अस्ति तं गीताश्लोकमेव उदाहरामि –

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**<br>
**मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि** ॥२.४७॥

१८. १. एतानि वाक्यानि सावधानं पठत, तत्रत्यानि विभक्तिरूपाणि च परिशीलयत –

१. शिवरामः **सर्वप्रथमस्थानं** प्राप्तवान् ।<br>
२. शिवरामः **परीक्षायां** सम्यक् लिखितवान् ।<br>
३. **शिक्षकाः** आवर्षं प्रीत्या बोधितवन्तः ।<br>
४. **परीक्षायाः पूर्वं** मासद्वयं दूरदर्शनं केनापि न प्रवर्तितमेव ।<br>
५. सहाध्यायिनः **मया सह** पठितवन्तः ।<br>
६. शिवरामस्य **पठने** इच्छा आसीत् ।<br>
७. **भवान्** परिश्रमेण पठितवान् ।<br>
८. **सर्वैः** ज्ञातः विषयः एषः ।<br>
९. एतादृशेन **चिन्तनेन** शिवरामः जीवने यशस्वी भविष्यति ।<br>
१०. **कर्मणि** एव अस्माकम् अधिकारः ।

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितेषु शब्देषु अन्या अन्या विभक्तिः प्रयुक्ता अस्ति ।

जानीत –

तेषु अधोरेखाङ्कितयोः शब्दयोः विभक्तिः उपपदविभक्तिः ।

यथा –

१. **परीक्षायाः** पूर्वं मासद्वयं दूरदर्शनं केनापि न प्रवर्तितमेव ।<br>
अत्र 'पूर्व'शब्दस्य योगे पञ्चमीविभक्तिः, 'परीक्षायाः' इति रूपम् ।

२. सहाध्यायिनः **मया** सह पठितवन्तः ।<br>
अत्र 'सह'शब्दस्य योगे तृतीयाविभक्तिः, 'मया' इति रूपम् ।

किमपि पदं निमित्तीकृत्य प्रवृत्ता विभक्तिः उपपदविभक्तिः इत्युच्यते ।

जानीत –

पूर्वं पठितेषु अन्येषु अष्टसु वाक्येषु स्थूलाक्षरैः मुद्रितेषु शब्देषु कारकविभक्तिः अस्ति। कारकं निमित्तीकृत्य प्रवृत्ता विभक्तिः कारकविभक्तिः इत्युच्यते। एतस्मिन् पाठे वयं कारकाणां ज्ञानं प्राप्नवाम –

एतानि वाक्यानि पठत –

१. चषकः अस्ति।

२. बालकः चषकं पश्यति।

३. बालकः चषकेण पिबति।

४. बालकः चषकात् जलं स्वीकरोति।

५. चषके जलम् अस्ति।

एतेषु वाक्येषु 'चषक'शब्दे नाना विभक्तयः प्रयुक्ताः सन्ति। ताः सर्वाः कारकविभक्तयः। प्रथमे वाक्ये चषकः कर्तृकारकं, द्वितीये कर्मकारकं, तृतीये करणकारकं, चतुर्थे अपादानकारकं, पञ्चमे अधिकरणकारकम्। कारकभेदात् विभक्तिभेदः। कस्मिन् कारके सति का विभक्तिः इति पाणिनिना सूत्रैः निर्दिष्टम् अस्ति। कारकज्ञानाभावे वाक्यप्रयोगे दोषाः भवेयुः।

यथा – 'बालकः चषकं पश्यति' इति शुद्धं वाक्यम्। परन्तु 'बालकः चषकं पिबति' इति अशुद्धं वाक्यम्। यतः पानक्रियायां चषकः करणम्। तस्य तृतीयाविभक्तिः भवेत्, न तु द्वितीयाविभक्तिः। अतः 'बालकः चषकेण पिबति' इति वाक्यं प्रयोक्तव्यम्।

**किं नाम कारकम् ?** क्रियान्वयि कारकम्। यत् क्रियया अन्वेति (सम्बन्धं प्राप्नोति) तत् कारकम् इति उच्यते।

यथा –

सः –

१. पाचकः पचति। अत्र पाचकः पाकक्रियायाम् अन्वेति। अतः पाचकः कारकम्। तत् कर्तृकारकम्।

२. अन्नं खादति। अत्र अन्नं भक्षणक्रियायाम् अन्वेति। अतः अन्नं कारकम्। तत् कर्मकारकम्।

३. परशुना छिनत्ति। अत्र परशुः छेदनक्रियायाम् अन्वेति। अतः परशुः कारकम्। तत् करणकारकम्।

४. पुत्राय धनं ददाति। अत्र पुत्रः दानक्रियायाम् अन्वेति। अतः पुत्रः कारकम्। तत् सम्प्रदानकारकम्।

५. सोपानात् पतति। अत्र सोपानं पतनक्रियायाम् अन्वेति। अतः सोपानं कारकम्। तत् अपादानकारकम्।

६. आसन्दे उपविशति। अत्र आसन्दः उपवेशनक्रियायाम् अन्वेति। अतः कारकम्। तत् अधिकरणकारकम्।

कर्तृकारकं क्रियया साक्षात् अन्वेति। अन्यानि कारकाणि तु परम्परया क्रियया अन्वयं प्राप्नुवन्ति इति ज्ञेयम्।

एतत् वाक्यं परिशीलयत –

**अयोध्यायाः राजा गां हस्तेन विप्राय गोष्ठात् गङ्गातीरे ददाति।**

अत्र कः ददाति ? कां ददाति ? केन ददाति ? कस्मै ददाति ? कस्मात् ददाति ? कस्मिन् ददाति ? इत्येतेषां प्रश्नानां

राजा ददाति, गां ददाति, हस्तेन ददाति, विप्राय ददाति, गोष्ठात् ददाति, गङ्गातीरे ददाति इत्येतानि वाक्यानि उत्तराणि भवन्ति । अतः दानक्रियायां षडपि कारकाणि अन्वितानि भवन्ति इति स्पष्टम् । कस्य राजा ? इति प्रश्नस्य तु 'अयोध्यायाः राजा' इति उत्तरं भवति । अयोध्यायाः अन्वयः राज्ञि एव, न तु दानक्रियायाम् । अतः एषा षष्ठी कारकं न इति ज्ञातव्यम् ।

जानीत – कारकाणि षड् सन्ति –

| | | |
|---|---|---|
| **(१) कर्तृकारकम्** | **(२) कर्मकारकम्** | **(३) करणकारकम्** |
| **(४) सम्प्रदानकारकम्** | **(५) अपादानकारकम्** | **(६) अधिकरणकारकम्** |

**कर्ता कर्म च करणं सम्प्रदानं तथैव च ।**
**अपादानाधिकरणमित्याहुः कारकाणि षट् ॥**

वयं सर्वेषां कारकाणां ज्ञानं क्रमशः प्राप्नवाम –

(सौकर्यदृष्ट्या अत्र करणकारकात् आरम्भः कृतः अस्ति । कर्तृकारकस्य कर्मकारकस्य च विवरणम् अन्ते करिष्यते ।)

१. **करणकारकम्**

एतानि वाक्यानि परिशीलयत –

हरिलालः छुरिकया फलं कर्तयति ।
सुषमा द्विचक्रिकया विद्यालयं गच्छति ।
गिरीशः उष्णजलेन स्नानं करोति ।

एतेषु प्रथमवाक्ये हरिलालस्य फलकर्तनक्रियायां छुरिका अत्यन्तम् उपकारकं साधनम् अस्ति । सुषमायाः विद्यालयगमनक्रियायां द्विचक्रिका अत्यन्तम् उपकारकं साधनम् अस्ति । गिरीशस्य स्नानक्रियायाम् उष्णजलम् अत्यन्तम् उपकारकं साधनम् अस्ति । अतः छुरिका द्विचक्रिका उष्णजलं च करणम् इति उच्यन्ते ।

जानीत –

यत् क्रियासिद्धौ अत्यन्तम् उपकारकं भवति तत् करणकारकम् । साधकतमं करणम् । (पा.सू. १.४.४३) क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात् इत्यर्थः ।

करणकारकात् **तृतीयाविभक्तिः** । कर्तृकरणयोः तृतीया । (पा.सू. १.३.१८)

अतः पूर्वतनेषु वाक्येषु छुरिकया, द्विचक्रिकया उष्णजलेन इति तृतीयाविभक्तिः प्रयुक्ता अस्ति ।

१८. २. एतानि वाक्यानि पठत । यथोदाहरणं कोष्ठकं पूरयत –

उदा. – **बालिका चषकेण पिबति ।**

१. मन्त्री विमानेन गच्छति ।    २. पिता लेखन्या लिखति ।

३. गजः शुण्डया खादति ।    ४. जनाः नौकया विहरन्ति ।

५. कृषिकः खनित्रेण खनति । ६. वयं पद्भ्यां चलामः ।

| | क्रिया | करणकारकम् | करणकारकस्य विभक्तिः |
|---|---|---|---|
| उदा. – | **पानक्रिया** | **चषकः** | **तृतीया** |
| | १. ____________ | ____________ | ____________ |
| | २. ____________ | ____________ | ____________ |
| | ३. ____________ | ____________ | ____________ |
| | ४. ____________ | ____________ | ____________ |
| | ५. ____________ | ____________ | ____________ |
| | ६. ____________ | ____________ | ____________ |

२. **सम्प्रदानकारकम्**

एतानि वाक्यानि परिशीलयत –

माता पुत्र्यै मिष्टान्नं ददाति ।
सुप्रिया भ्रात्रे वस्त्रं यच्छति ।
शान्तला देवाय नैवेद्यं निवेदयति ।

एतेषु प्रथमवाक्ये माता स्वसमीपे विद्यमानस्य मिष्टान्नस्य सम्बन्धः पुत्र्या भवतु इति इच्छति । द्वितीयवाक्ये सुप्रिया वस्त्रस्य सम्बन्धः भ्रात्रा भवतु इति इच्छति । तृतीयवाक्ये शान्तला नैवेद्यस्य सम्बन्धः देवेन भवतु इति इच्छति । अतः पुत्री भ्राता देवश्च सम्प्रदानम् इति उच्यन्ते ।

जानीत –

कर्ता कर्मणः सम्बन्धः येन भवतु इति इच्छति सः सम्प्रदानम् । कर्मणा यमभिप्रैति स सम्प्रदानम् । (पा.सू. १.४.३२) कर्ता कर्मणा यं सम्बन्धुम् इच्छति सः सम्प्रदानसंज्ञः स्यात् इत्यर्थः ।

सम्प्रदायकारकात् **चतुर्थीविभक्तिः** । चतुर्थी सम्प्रदाने । (पा.सू. २.३.१३)

अतः पूर्वतनेषु वाक्येषु पुत्र्यै, भ्रात्रे देवाय इति चतुर्थीविभक्तिः प्रयुक्ता अस्ति ।

१८. ३. एतानि वाक्यानि पठत । यथोदाहरणं कोष्ठकं पूरयत –

उदा. – **बालिका शिशवे पुष्पं ददाति ।**

१. स्वामी सेवकाय धनं यच्छति । २. पिता देवाय नैवेद्यं निवेदयति ।
३. अग्रजा देवाय पुष्पम् अर्पयति । ४. सैनिकः देशाय प्राणान् समर्पयति ।
५. माता पुत्राय उपाहारं ददाति । ६. प्रकाशः देवदत्ताय पत्रं वितरति ।

| | क्रिया | कर्ता | कर्म | सम्प्रदानकारकम् |
|---|---|---|---|---|
| यथा – | **दानक्रिया** | **बालिका** | **पुष्पम्** | **शिशुः** |
| | १. ________ | ________ | ________ | ________ |
| | २. ________ | ________ | ________ | ________ |
| | ३. ________ | ________ | ________ | ________ |
| | ४. ________ | ________ | ________ | ________ |
| | ५. ________ | ________ | ________ | ________ |
| | ६. ________ | ________ | ________ | ________ |

३. **अपादानकारकम्**

एतानि वाक्यानि परिशीलयत –

फलं वृक्षात् पतति ।
सचिवः विदेशात् आगच्छति ।
विनायकः विद्यालयात् गृहं याति ।

एतेषु प्रथमवाक्ये फलस्य वृक्षेण वियोगः जातः अस्ति । वृक्षः वियोगस्य अवधिभूतः अस्ति । द्वितीयवाक्ये सचिवस्य विदेशेन च वियोगः जातः अस्ति । (पूर्वं तु संयोगः आसीत् ।) विदेशः वियोगस्य अवधिभूतः अस्ति । तृतीयवाक्ये विनायकस्य विद्यालयेन वियोगः जातः अस्ति । वियोगस्य अवधिभूतः अस्ति विद्यालयः । अतः वृक्षः विदेशः विद्यालयः च अपादानम् इति उच्यन्ते ।

जानीत –

वियोगे सति यत् अवधिभूतम् अस्ति तत् अपादानकारकम् । ध्रुवमपाये अपादानम् । (पा.सू. १.४.२४) विभागाश्रयः अपादानसंज्ञः स्यात् इत्यर्थः ।

अपादानकारकात् **पञ्चमीविभक्तिः** । अपादाने पञ्चमी । (पा.सू. २.३.२८)

अतः पूर्वतनेषु वाक्येषु वृक्षात्, विदेशात्, विद्यालयात् इति पञ्चमीविभक्तिः प्रयुक्ता अस्ति ।

१८. ४. एतानि वाक्यानि पठत । यथोदाहरणं कोष्ठकं पूरयत –

उदा. **बाला कूपात् जलं स्वीकरोति ।**

१. सुधाकरः वृक्षात् फलं चिनोति । २. पिता वित्तकोषात् धनम् आनयति ।
३. अधिकारिणी वाहनात् अवतरति । ४. लताभ्यः पुष्पाणि पतन्ति ।
५. अग्रजः कार्यालयात् आगच्छति । ६. चोरः वित्तकोषात् धनम् अपहरति ।

| | क्रिया | कयोः विभागः जातः ? | अपादानकारकम् |
|---|---|---|---|
| यथा – | **स्वीकरणक्रिया** | **कूपस्य जलस्य च** | **कूपः** |
| १. | ____________ | ____________ | ____________ |
| २. | ____________ | ____________ | ____________ |
| ३. | ____________ | ____________ | ____________ |
| ४. | ____________ | ____________ | ____________ |
| ५. | ____________ | ____________ | ____________ |
| ६. | ____________ | ____________ | ____________ |

### ४. अधिकरणकारकम्

एतानि वाक्यानि परिशीलयत –

मुरलीकृष्णः आसन्दे उपविशति ।
मालिनी दिल्लीनगरे निवसति ।
नरसिंहाचार्यः शारदाविद्यालये पाठयति ।

एतेषु प्रथमवाक्ये मुरलीकृष्णस्य उपवेशनक्रियायाः आधारः आसन्दः अस्ति । द्वितीयवाक्ये मालिन्याः निवसनक्रियायाः आधारः दिल्लीनगरम् अस्ति । तृतीये वाक्ये नरसिंहाचार्यस्य पाठनक्रियायाः आधारः विद्यालयः अस्ति । अतः आसन्दः दिल्ली विद्यालयः च अधिकरणम् इति उच्यन्ते ।

जानीत –

क्रियायाः आधारः अधिकरणम् । स च आधारः पूर्वतनेषु त्रिषु अपि उदाहरणेषु कर्तृद्वारा अस्ति । कर्मद्वारा अपि सः भवितुम् अर्हति । यथा –

**गिरिधरः पात्रे ओदनं पचति ।** अत्र ओदनं कर्म । पात्रं पाकक्रियायाः आधारः अस्ति ।

एवं च कर्तृद्वारा कर्मद्वारा वा तन्निष्ठक्रियायाः आधारः अधिकरणसंज्ञः स्यात् इत्यर्थः । आधारोऽधिकरणम् । (पा.सू. १.४.४५)

अधिकरणकारकात् **सप्तमीविभक्तिः ।** सप्तम्यधिकरणे च । (पा.सू. २.३.३६)

अतः पूर्वतनेषु वाक्येषु आसन्दे, दिल्लीनगरे शारदाविद्यालये इति सप्तमीविभक्तिः प्रयुक्ता अस्ति ।

विशेषांशः – अधिकरणकारकं कर्तुः वा कर्मणः आधारः भवति इति ज्ञातम् ।

१८. ५. एतानि वाक्यानि पठत । यथोदाहरणं कोष्ठकं पूरयत –

उदा. **कृषीवलः ग्रामे वसति ।**

१. हंसः जले तरति ।        २. शिशुः शय्यायां शेते ।

३. मम पठने इच्छा अस्ति। ४. सः विद्यालये पाठं पठति।

५. सः शरावे जलं क्वथयति। ६. विठलः अमेरिकायां सेवां करोति।

| | क्रिया | अधिकरणकारकम् | कस्य आधारः ? (कर्तुः / कर्मणः) |
|---|---|---|---|
| यथा – | **वसनक्रिया** | **ग्रामः** | **कृषीवलस्य (कर्तुः)** |
| | १. ________ | ________ | ________ |
| | २. ________ | ________ | ________ |
| | ३. ________ | ________ | ________ |
| | ४. ________ | ________ | ________ |
| | ५. ________ | ________ | ________ |
| | ६. ________ | ________ | ________ |

आधारः त्रिविधः १. औपश्लेषिकः २. अभिव्यापकः ३. वैषयिकः

क्रमेण एतान् जानीम –

१. **औपश्लेषिकः** – सः आधारः यत्र आधेयस्य एकदेशेन व्याप्तिः।

यथा – १ – बालकः कटे उपविशति।

अत्र बालकः आधेयः कर्ता च। सः कटस्य एकदेशे (एकस्मिन् भागे) उपविशति न तु कृत्स्ने। एवम् आधेयस्य एकदेशेन व्याप्तिरिति अयम् आधारः **औपश्लेषिकः**।

२. संस्कृतभारत्याः मुख्यकार्यालयः दिल्लीनगरे अस्ति।

३. गङ्गानद्याः तीरे वाराणसी अस्ति।

२. **अभिव्यापकः** – सः आधारः यत्र आधेयस्य सर्वदेशेन व्याप्तिः।

यथा – १. तिलेषु तैलम् अस्ति।

अत्र तैलम् आधेयं कर्तृ च। तच्च तिलेषु सर्वदेशे (सर्वस्मिन् भागे) अस्ति। न तु एकस्मिन् देशे। एवम् आधेयस्य एकदेशेन व्याप्तिरिति अयम् आधारः **अभिव्यापकः**।

२. समुद्रजले लवणम् अस्ति।

३. तस्य वचने माधुर्यम् अस्ति।

३. **वैषयिकः** – सः आधारः यत्र आधेयस्य विषयतादिना सम्बन्धः।

यथा – १. मम पठने इच्छा अस्ति।

अत्र इच्छा आधेया कर्त्री च। सा पठने विषयतया आस्ति। पठनविषये इच्छा अस्तीति तात्पर्यम्। अतः अयमाधारः **वैषयिकः** ।

२. भारतीयानाम् अस्माकं देवे श्रद्धा अस्ति।

३. नलिन्याः क्रीडायां महती आसक्तिः ।

**अभ्यासः**

१८. ६. अधस्तनेषु वाक्येषु कः आधारः, सः आधारः कीदृशः इति चिन्तयित्वा यथोदाहरणं कोष्ठकं पूरयत –

उदा. **सः गुरुकुले वसति ।**

१. भारतीयानां संस्कृतभाषायाम् आसक्तिः अधिका। २. फले माधुर्यम् अस्ति।
३. फलं वृक्षे अस्ति ४. अर्चकः नद्यां स्नानं करोति।
५. बालिकायाः गाने अभिलाषः अस्ति। ६. आकाशे चन्द्रः शोभते।

| | आधारः | सः कीदृशः ? |
|---|---|---|
| **यथा –** | **गुरुकुलम्** | **औपश्लेषिकः** |
| | १. ____________ | ____________। |
| | २. ____________ | ____________। |
| | ३. ____________ | ____________। |
| | ४. ____________ | ____________। |
| | ५. ____________ | ____________। |
| | ६. ____________ | ____________। |

## ५. कर्तृकारकम्

एतानि वाक्यानि परिशीलयत –

रामकृष्णः ओदनं पचति।
शिवरामः वार्तां पठति।
गणेशः चित्राणि लिखति।

एतेषु वाक्येषु रामकृष्णस्य पाकक्रियायां शिवरामस्य पठनक्रियायां गणेशस्य लेखनक्रियायां च स्वातन्त्र्येण अन्वयः (सम्बन्धः) अस्ति। अतः रामकृष्णः, शिवरामः गणेशः च कर्तृकारकम्।

जानीत –

क्रियायां स्वातन्त्र्येण विवक्षितः अर्थः कर्ता। स्वतन्त्रः कर्ता। (पा.सू. १.४.५४)

अधुना कर्तुः का विभक्तिः भवेत् इति प्रश्नः प्रस्तुतः । सूत्रं तु वदति कर्तुः तृतीयाविभक्तिः भवेत् इति । (कर्तृकरणयोः तृतीया । (पा.सू. २.३.१८) यदि एवं स्यात् तर्हि –

रामकृष्णेन ओदनं पचति ।

शिवरामेण वार्तां पठति ।

गणेशेन चित्राणि लिखति ।

इति वाक्यानि भवेयुः । परन्तु लोके तादृशवाक्यं न श्रूयते । लोके तु रामकृष्णः पचति, शिवरामः पठति, गणेशः लिखति इति वाक्यानि एव श्रूयन्ते । तत् कथम् ? एतद् ज्ञानाय आदौ अस्माभिः अन्यदपि किञ्चित् ज्ञातव्यम् अस्ति ।

पठति, लिखति, पश्यति इत्यादीनि क्रियापदानि वयं जानीमः । तत्र त्रयः अंशाः भवन्ति –

यथा – पठति

तत्र पुनः धातोः फलं व्यापारः इति अर्थद्वयम् । विकरणप्रत्ययस्तु धातूनां गणव्यवस्थायाम् उपकारको भवति । तस्य न कोऽपि अर्थः । कर्तरि प्रयोगे तिङ्प्रत्ययस्य कर्ता, कालः, संख्या चेति त्रयः अर्थाः ।

कर्मणि प्रयोगे तिङ्प्रत्ययस्य कर्म, कालः, संख्या चेति त्रयः अर्थाः । भावे प्रयोगे तिङ्प्रत्ययस्य भावः कालश्च अर्थः । एतदेव अधः सचित्रं दर्शितम् अस्ति –

**१. पाचकः ओदनं पचति / ते ।**

**२. पाचकेन ओदनः पच्यते ।**

**३. रामेण भूयते ।**

रामकृष्णः ओदनं पचति इत्यस्मिन् प्रकृतवाक्ये पचति इत्यत्र वर्तमानेन 'ति' इति तिङ्प्रत्ययेन कर्ता (रामकृष्णः) उक्तः (अभिहितः) एव अस्ति। लोके एकम् अर्थं बोधयितुम् एकं पदं प्रयुज्यते। तमेव अर्थं बोधयितुं द्वितीयस्य पदस्य प्रयोगः न क्रियते। एवं सति अत्रापि कर्तृरूपम् अर्थं बोधयितुं तिङ्प्रत्ययः अस्माभिः प्रयुक्तः अस्ति। (तिङ्प्रत्ययेन कर्ता अभिहितः अस्ति।) अतः पुनः कर्तारं बोधयितुम् अन्यस्याः विभक्तेः प्रयोगो नावश्यकः। अतः कर्तृकरणयोः तृतीया इति सूत्रस्य अत्र अवसरः नास्ति। (कर्तरि अनभिहिते एव तृतीया।) यद्येवम्, कर्तृवाचकशब्दस्य का विभक्तिः प्रयोक्तव्या इति प्रश्नः भवति। तदा प्रथमाविभक्तिः इत्येव उत्तरम्।

रामकृष्णेन ओदनः पच्यते।
शिवरामेण वार्ता पठ्यते।
गणेशेन चित्राणि लिख्यन्ते।

एतेषु वाक्येषु तु 'ते' इत्यनेन तिङ्प्रत्ययेन कर्म उक्तं भवति, न तु कर्ता। (कर्मणि प्रयोगे तिङ्प्रत्ययस्य अर्थः कर्म इति पूर्वमेव उक्तम्।) यतः तिङ्प्रत्ययेन कर्ता न उक्तः अतः कर्तारं बोधयितुं विभक्तेः प्रयोगः आवश्यकः। का विभक्तिः प्रयोक्तव्या इति जिज्ञासायां कर्तृकरणयोः तृतीया इति पूर्वोक्तप्रकारेण तृतीयाविभक्तिः एव भवति। अतः पूर्वतनेषु वाक्येषु रामकृष्णेन, शिवरामेण गणेशेन इति तृतीयाविभक्तिः प्रयुक्ता अस्ति।

६. **कर्मकारकम्**

एतानि वाक्यानि परिशीलयत –

हेमन्तः विद्यालयं गच्छति।
विजयः संगणकं क्रीणाति।
सुनयना चलनचित्रं पश्यति।

प्रथमवाक्ये कर्ता हेमन्तः स्वीयया गमनरूपया क्रियया विद्यालयं सम्बन्धुम् इच्छति। द्वितीयवाक्ये कर्ता विजयः क्रयणक्रियया संगणकं सम्बन्धुम् इच्छति। तृतीयवाक्ये कर्त्री सुनयना दर्शनक्रियया चलनचित्रं सम्बन्धुम् इच्छति। अतः विद्यालयः संगणकं चलनचित्रं च कर्मकारकम्।

जानीत –

कर्ता क्रियया यं सम्बन्धुम् इच्छति सः कर्म इति उच्यते। कर्तुरीप्सिततमं कर्म। (पा.सू. १.४.४९) कर्तुः क्रियया आप्तुम् इष्टतमं कारकं कर्मसंज्ञं स्यात् इति अर्थः। कर्मकारकात् द्वितीयाविभक्तिः भवति। परन्तु अत्रापि कर्मणि अनभिहिते इति अनुवर्तते। तन्नाम तिङ्प्रत्ययेन यदि कर्म अभिहितं न भवति तर्हि तस्मात् द्वितीयाविभक्तिः। कर्तरिप्रयोगे तिङ्प्रत्ययेन कर्ता उक्तः भवति, न तु कर्म इति पूर्वं वयं ज्ञातवन्तः। यतः कर्म न उक्तम् अतः तत् बोधयितुं द्वितीयाविभक्तिः

प्रयोक्तव्या। (कर्मणि द्वितीया) अतः पूर्वतनेषु वाक्येषु विद्यालयं संगणकं चलनचित्रम् इति द्वितीयाविभक्तिः प्रयुक्ता अस्ति।

कर्मणि प्रयोगे तु तिङ्प्रत्ययेन कर्म उक्तं भवति।

यथा – श्रीनिवासेन योगाभ्यासः क्रियते इत्यत्र 'ते' इत्यनेन तिङ्प्रत्ययेन योगाभ्यासरूपं कर्म उक्तं भवति। अतः तं बोधयितुं पुनः द्वितीयाविभक्तेः प्रयोगो नावश्यकः। अतः द्वितीयाविभक्तिः न प्रवर्तते। प्रथमाविभक्तिः एव प्रयुज्यते।

स्मरत

| | |
|---|---|
| कर्तरि अनभिहिते तस्मात् तृतीयाविभक्तिः भवति। | **गायत्र्या ओदनः पच्यते।** |
| अभिहिते तु प्रथमाविभक्तिः। | **गायत्री ओदनं पचति।** |
| कर्मणि अनभिहिते तस्मात् द्वितीयाविभक्तिः भवति। | **गायत्री ओदनं पचति।** |
| अभिहिते तु प्रथमाविभक्तिः। | **गायत्र्या ओदनः पच्यते।** |

१८. ७. एतानि वाक्यानि पठत। यथोदाहरणं कोष्ठकं पूरयत –

| | वाक्यम् | क्रिया | कर्तृकारकम् | कर्मकारकम् |
|---|---|---|---|---|
| उदा. | **बालिका जलं पिबति।** | **पानक्रिया** | **बालिका** | **जलम्** |
| | १. बालः ग्रामं गच्छति। | ________ | ________ | ________ |
| | २. वानरः फलं खादति। | ________ | ________ | ________ |
| | ३. भक्तः हरिं भजति। | ________ | ________ | ________ |
| | ४. चन्द्रः जनान् तोषयति। | ________ | ________ | ________ |
| | ५. माता मधुरं पचति। | ________ | ________ | ________ |

१८. ८. अधः प्रदत्तानि वाक्यानि अशुद्धानि सन्ति। यतः तत्र कारकेषु अननुरूपा विभक्तिः अस्ति। वाक्ये रेखाङ्कितस्य पदस्य किं कारकं, का विभक्तिः उचिता इति चिन्तयित्वा शुद्धं वाक्यं लिखत –

| अशुद्धं वाक्यम् | कारकम् | उचितविभक्तिः | शुद्धं वाक्यम् |
|---|---|---|---|
| उदा. **बालकः चषकाय पश्यति।** | **कर्मकारकम्** | **द्वितीया** | **बालकः चषकं पश्यति।** |
| १. बालकः धनेन <u>वस्त्राय</u> क्रीणाति। | ________ | ______ | ____________________। |
| २. बालकः <u>चषकं</u> पिबति। | ________ | ______ | ____________________। |

३. बालकः <u>चषकेण</u> इच्छति । ________ ______ ________________________।

४. बालकः <u>चषकं</u> धनं ददाति । ________ ______ ________________________।

५. बालकेन <u>चषकः</u> रसः पीयते । ________ ______ ________________________।

६. <u>चषकेण</u> जलं स्रवति । ________ ______ ________________________।

१८. ९. एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितेषु किं कारकम्, का विभक्तिः इति चिन्तयित्वा कोष्ठकं पूरयत –

उदा – शिवरामः **सर्वप्रथमस्थानं** प्राप्तवान् ।

१. **शिवरामं** पत्रकारः अभिनन्दति ।

२. शिवरामः उत्तमरीत्या **परीक्षायां** लिखितवान् ।

३. **शिक्षकाः** आवर्षं प्रीत्या बोधितवन्तः ।

४. शिवरामस्य **पठने** इच्छा आसीत् ।

५. परीक्षादिने **कर्मकरैः** प्रकोष्ठानां स्वच्छता कृता ।

६. **परीक्षानिर्वाहकैः** प्रश्नपत्रिकाः वितीर्णाः ।

७. **भवान्** परिश्रमेण पठितवान् ।

८. **सर्वैः** ज्ञातः विषयः एषः ।

९. **गीताश्लोकम्** उदाहरामि ।

१०. **कर्मणि** एव अस्माकम् अधिकारः ।

| | शब्दः | कारकम् | विभक्तिः |
|---|---|---|---|
| उदा – | **सर्वप्रथमस्थानम्** | **कर्मकारकम्** | **द्वितीया** |
| | १. शिवरामम् | ________ | ________ |
| | २. परीक्षायाम् | ________ | ________ |
| | ३. शिक्षकाः | ________ | ________ |
| | ४. पठने | ________ | ________ |
| | ५. कर्मकरैः | ________ | ________ |
| | ६. परीक्षानिर्वाहकैः | ________ | ________ |
| | ७. भवान् | ________ | ________ |

८. सर्वैः ______ ______

९. गीताश्लोकम् ______ ______

१०. कर्मणि ______ ______

१८. १०. (अ) अधस्तनः गीताश्लोकः शिवरामस्य विद्यालये ध्येयवाक्यम् अस्ति । विद्यालयस्य छात्राः अध्यापकाश्च तत्रत्यं सन्देशं सदा स्मरन्ति, तथैव जीवितुं प्रयत्नं कुर्वन्ति । तं श्लोकं सन्देशं च भवन्तः अपि जानन्तु चिन्तयन्तु च –

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि ॥२.४७॥**

(ब) एतस्य गीताश्लोकस्य चत्वारि वाक्यानि अधः लिखितानि सन्ति । तेषु रेखाङ्कितानां पदानां का कारकसंज्ञा इति लिखत –

सूचना – प्रथमायां पङ्क्तौ क्रियापदे अध्याहृते इति जानीत । ते आवरणे स्तः ।

कर्मणि एव ते अधिकारः (अस्ति) । ______

अधिकारः फलेषु कदाचन मा (भवतु) । ______

त्वं कर्मफलहेतुः मा भूः । ______

सङ्गस्ते अकर्मणि मा अस्तु । ______

१८. ११. (अ) महात्मानः समाजोपकारकं बहु कार्यं कुर्वन्तः भवन्ति । परन्तु प्रत्येकं कार्यम् ईश्वरार्पणबुद्ध्या एव कुर्वन्ति । अधस्तनश्लोकं पठत –

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतेस्स्वभावात् ।
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि ॥

एतस्मिन् श्लोके क्रियापदद्वयम् अस्ति – करोमि, समर्पयामि इति । एतस्य श्लोकस्य अन्वयः अयम् अस्ति – कायेन वाचा मनसा इन्द्रियैः वा बुद्ध्या आत्मना वा प्रकृतेः स्वभावात् यत् यत् करोमि (तत्) सकलं परस्मै नारायणाय इति (उक्त्वा) समर्पयामि ।

(ब) एतेषां पदानां का कारकसंज्ञा का विभक्तिः इति लिखित्वा कोष्ठकं पूरयत –

| | पदम् | कारकम् | कारकविभक्तिः |
|---|---|---|---|
| यथा – | **कायेन** | **करणकारकम्** | **तृतीया** |
| | १. वाचा | ______ | ______ |
| | २. मनसा | ______ | ______ |

३. इन्द्रियैः ________ ________

४. बुद्ध्या ________ ________

५. आत्मना ________ ________

६. सकलम् ________ ________

७. परस्मै ________ ________

८. नारायणाय ________ ________

## ज्ञानवर्धनी

कस्मिन् अवसरे का विभक्तिः भवति इति ज्ञानाय एतत् कोष्ठकं सावधानं परिशीलयत –

### प्रथमा

| | |
|---|---|
| – कर्तरि प्रयोगे कर्तुः प्रथमाविभक्तिः भवति। | – बालः श्लोकं पठति। |
| – कर्मणि प्रयोगे कर्मणः प्रथमाविभक्तिः भवति। | – बालेन श्लोकः पठ्यते। |

### द्वितीया

| | |
|---|---|
| – कर्तरि प्रयोगे कर्मणः द्वितीयाविभक्तिः भवति। | – वानरः वृक्षम् आरोहति। |
| – 'परितः' प्रयोगे पूर्वं द्वितीयाविभक्तिः भवति। | – विद्यालयं परितः उद्यानम् अस्ति। |
| – 'विना' प्रयोगे पूर्वं द्वितीयाविभक्तिः भवति। | – वायुं विना कोऽपि न जीवति। (तृतीया पञ्चमी अपि भवतः।) |
| – द्विकर्मकधातूनां प्रयोगे कर्मणोः द्वितीयाविभक्तिः भवति। | – अर्जुनः कृष्णं प्रश्नं पृच्छति। |

### तृतीया

| | |
|---|---|
| – करणे तृतीयाविभक्तिः भवति। | – सीता लेखन्या लिखति। |
| – भावे कर्मणि च प्रयोगे कर्तुः तृतीयाविभक्तिः भवति। | – पुष्पेण विकस्यते। – लेखकेन ग्रन्थाः लिख्यन्ते। |
| – 'सह' प्रयोगे पूर्वं तृतीयाविभक्तिः भवति। | – अहं मित्रेण सह गच्छामि। |
| – 'सदृश' प्रयोगे पूर्वं तृतीयाविभक्तिः भवति। | – मुखं चन्द्रेण सदृशम् अस्ति। (षष्ठी अपि भवति।) |
| – कारणवाचकात् तृतीयाविभक्तिः भवति। | – विद्यया ज्ञानं वर्धते। (पञ्चमी अपि भवति।) |

## चतुर्थी

- ददाति इत्यर्थे यस्मै ददाति तस्मात् चतुर्थीविभक्तिः भवति । – विनायकः मित्राय पुस्तकं ददाति ।
- 'रोचते'प्रयोगे यस्मै रोचते तस्मात् चतुर्थीविभक्तिः भवति । – मम अनुजाय मधुरं रोचते ।
- नमः प्रयोगे चतुर्थीविभक्तिः भवति । – रामचन्द्राय नमः । / सरस्वत्यै नमः ।
- कुप्यति / असूयति-प्रयोगे चतुर्थीविभक्तिः भवति । – लता गीतायै कुप्यति । मीना लक्ष्म्यै कुप्यति ।

## पञ्चमी

- विभागे सति अवधिभूतात् पञ्चमीविभक्तिः भवति । – सुधाकरः वाहनात् पतति ।
- यस्मात् भयं भवति ततः पञ्चमीविभक्तिः भवति । – नगरे चोरात् भयम् अधिकम् ।
- यस्मात् रक्षति ततः पञ्चमीविभक्तिः भवति । – देवः अस्मान् कष्टात् रक्षति ।
- ऋतेप्रयोगे पञ्चमीविभक्तिः भवति । – संघटनात् ऋते अन्यः उपायः नास्ति ।
- प्रभृति / आरभ्य – प्रयोगे पञ्चमीविभक्तिः भवति । – भानुवासरात् प्रभृति सः अस्वस्थः अस्ति । – सोमवासरात् आरभ्य सः कार्यालयं न आगतवान् ।
- पूर्व – पर – एतयोः प्रयोगे अपि पञ्चमीविभक्तिः भवति । – गुरुवासरः शुक्रवासरात् पूर्वः । – वैशाखमासः चैत्रमासात् परः ।

## षष्ठी

- सम्बन्धे षष्ठीविभक्तिः भवति । – वसुदेवस्य पुत्रः श्रीकृष्णः ।
- भाववाचकस्य (ल्युडन्तस्य) प्रयोगे षष्ठीविभक्तिः भवति । – ग्रन्थानाम् अध्ययनम् ।
- क्रियायाः पदद्वयेन प्रतिपादने षष्ठीविभक्तिः भवति । – अभिरामः व्याकरणस्य अध्ययनं करोति । (अधीते – अध्ययनं करोति)

## सप्तमी

- आधारात् सप्तमीविभक्तिः भवति । – गोविन्दः आसन्दे उपविशति ।
- स्निह्यति/विश्वसिति-प्रयोगे सप्तमीविभक्तिः भवति । – शेखरः श्यामे स्निह्यति । – भक्तः देवे विश्वसिति ।
- पृथक्करणे सप्तमीविभक्तिः भवति । – नाटकेषु अभिज्ञानशाकुन्तलं श्रेष्ठम् । (षष्ठी अपि भवति ।)
- सत्सप्तमी – आचार्ये आगते सर्वे उत्तिष्ठन्ति ।

---

**वि. सू. –** *कारकविषयं सम्यक् ज्ञातुं संस्कृतभारत्या प्रकाशितं 'कारकम्' इति पुस्तकं पठनीयम् ।*

# १९. युक्ताहारविहारस्य...

एतां कथां सावधानं पठत -

**तद्धितप्रत्यया:**

विन्ध्यपर्वते कस्मिंश्चित् वृक्षे किञ्चन **शौकं** (शुकानां समूहः) आसीत् । तत्र कश्चित् शुकः पत्न्या सह न्यवसत् । ताभ्यां दम्पतिभ्यां शावकौ प्राप्तौ । एकदा कश्चित् व्याधः जालं प्रसार्य तौ शावकौ गृहीतवान् । एकं शावकं कस्मैचित् साधवे विक्रीतवान् । अपरं कश्चित् **सौनिकः** (सूना प्राणिवधस्थानं प्रयोजनं यस्य सः) क्रीतवान् ।

तौ उभौ क्रेतारौ शावकं स्वं स्वं गृहं नीत्वा तम् आलापयन्तौ आहारं च खादयन्तौ प्रेम्णा पालितवन्तौ । साधुः शावकस्य नाम राम इति अकरोत् । सौनिकस्तु दुर्मुखः इति । साधोः गृहे प्रवृद्धः रामः तस्य मधुरैः वचनैः दिने दिने सुसंस्कृतः अभवत् । सः आगतान् जनान् सुवचनैः प्रीणयन् **सात्त्विकं** (सत्त्वस्य सम्बन्धिनं) भावं प्रकटयति । साधुः **वैयाकरणः** (व्याकरणम् अधीते वेत्ति वा) आसीत् । सः शिष्यान् व्याकरणं पाठयति । **तदीयं** पाठं श्रुत्वा रामः 'मम नाम रामः । परन्तु नाहं **दाशरथिः** (दशरथस्य अपत्यं पुमान्)। अतः **जानकी** (जनकस्य अपत्यं स्त्री), **सौमित्रिः** (सुमित्रायाः अपत्यं पुमान्) **आञ्जनेयः** (अञ्जनायाः अपत्यं पुमान्) वा नास्ति मत्सकाशे' इत्यादीनि वाक्यानि वदन् जनानां मनः रञ्जयति स्म । तत्र दुर्मुखस्तु परुषवचनानि श्रुत्वा श्रुत्वा दिने दिने अतीव दुष्टोऽभवत् । तदा तदा 'असौ मया हतः शत्रुः हनिष्ये चापरानपि । ईश्वरोऽहमहं **भोगी** (भोगः अस्य अस्ति) सिद्धोऽहं **बलवान्** (बलम् अस्य अस्ति) **सुखी**'(सुखम् अस्य अस्ति) इत्यादिवचनैः **दौष्ट्यं** (दुष्टस्य भावं) दर्शयति स्म ।

कदाचित् तौ शावकौ पञ्जरबन्धनात् कथञ्चित् मुक्तिं प्राप्तवन्तौ । योजनदूरे आम्रतरौ रामः नीडं विरचय्य सुखेन न्यवसत् । अपरस्मिन् न्यग्रोधपादपे दुर्मुखो न्यवसत् ।

एकदा कश्चित् **पथिकः** (पन्थानं गच्छति) तेनैव मार्गेण आगतः । न्यग्रोधपादपस्य छायायां विश्रमितुकामम् आतपक्लान्तं तं दृष्ट्वा दुर्मुखः अन्यान् पक्षिणः उद्दिश्य ''अये, **मानवः** (मनोः अपत्यं पुमान्) कश्चिदागतः । तस्य चक्षुषी अपनयत । गलं भित्त्वा अश्नाम'' इति उच्चैः आक्रोशत् । तत् श्रुत्वा त्रस्तः पथिकः पलायत । ततः सः आम्रतरोः समीपम् आगतः । तदा रामशुकः इतरान् विहङ्गान् प्रावदत् – ''अये कोऽप्यतिथिः आगतः अस्ति । तस्य **आतिथ्यं** करवाम । **अर्घ्यं पाद्यं** च कल्पयाम'' इति ।

विस्मितः पथिकः अचिन्तयत् – 'अये, **तत्रत्यः** शुकः तथा वदति, **अत्रत्यः** तु एवम् । किमत्र कारणं स्यात्' इति । तेन पृष्टः रामोऽवदत् – ''आवां यमलौ भ्रातरौ । अहं साधोः गृहे प्रवृद्धोऽभवम् । तत्र सर्वदा अतिथीन् उपचरन्तं साधुमपश्यम् । मधुरालापान् अशृणवम् । अतो मे बुद्धिरेवं प्रवर्तते । सः शुकः सौनिकस्य गृहे व्यवर्धत । अजान् मेषान् सूकरांश्च हन्यमानान् अपश्यत् । परुषवचनानि चाशृणोत् । ततस्तस्य बुद्धिस्तादृशी'' इति ।

अत एव उच्यते सत्सङ्गतिः आवश्यकी । आहारशुद्धौ सत्त्वशुद्धिः इति च ।

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥६.१७॥**

एतस्यां कथायां स्थूलाक्षरैः मुद्रितानि पदानि तद्धितप्रत्ययान्तानि सन्ति । आवरणे पदस्य विग्रहवाक्यं दर्शितम् अस्ति ।

एतेषु गीतावाक्येषु स्थूलाक्षरैः मुद्रितानि पदानि परिशीलयत -

मामकाः पाण्डवाश्चैव (**पाण्डवाः** चैव ) किमकुर्वत सञ्जय । (१.१)
वृष्णीनां वासुदेवोऽस्मि (**वासुदेवः** अस्मि) पाण्डवानां धनञ्जयः । (१०.३७)
**सौभद्रो** द्रौपदेयाश्च (**द्रौपदेयाः** च) सर्व एव महारथाः । (१.६)
एवमुक्तो हृषीकेशो गुडाकेशेन **भारत** । (१.२४)
तत्रापश्यत्स्थितान् **पार्थः** पितॄनथ **पितामहान्** । (१.२६)
सेनानीनामहं स्कन्दः सरसामस्मि **सागरः** । (१०.२४)

१९. १. एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितेषु पदेषु उचितानि अर्थानुगुणं रिक्तस्थानेषु लिखत -

| | |
|---|---|
| द्रौपद्याः अपत्यम् (पुमान्) | ____________ |
| वसुदेवस्य अपत्यम् (पुमान्) | ____________ |
| भरतस्य अपत्यम् (पुमान्) | ____________ |
| पृथायाः अपत्यम् (पुमान्) | ____________ |
| सुभद्रायाः अपत्यम् (पुमान्) | ____________ |
| पाण्डोः अपत्यम् (पुमान्) | ____________ |

एतेषु वाक्येषु स्थूलाक्षरैः मुद्रितानि पदानि तद्धितप्रत्ययान्तानि सन्ति ।

जानीत -

तस्मै हितम् (तद्धितम्) इत्यादिषु अर्थेषु बहवः प्रत्ययाः विहिताः सन्ति । ते सर्वेऽपि तद्धितप्रत्ययाः इति उच्यन्ते । कृत्प्रत्ययाः धातोः विहिताः, तद्धितप्रत्ययास्तु सुबन्तात् विहिताः ।

तद्धितप्रत्ययाः बहवः सन्ति । ते च बहुषु अर्थेषु भवन्ति । केषाञ्चिदेव प्रत्ययानां निरूपणम् अत्र क्रियते -

### अ) अपत्यार्थः

१. **अण्प्रत्ययः** - उदा. १. वसुदेवस्य अपत्यम् इत्यर्थे वसुदेव + अण् = वासुदेवः (१०.३७) (अपत्यशब्दस्य सन्तानः इत्यर्थः । स च पुमान् स्त्री वा भवितुम् अर्हति । तद्बोधनाय अग्रे पुमान् इति स्त्री इति वा शब्दः प्रयुज्यते ।)

| | | |
|---|---|---|
| पाण्डोः अपत्यं पुमान् | - पाण्डु + अण् | = पाण्डवः (१.१) |
| मधोः अपत्यं पुमान् | - मधु + अण् | = माधवः (१.१४) |
| धृतराष्ट्रस्य अपत्यं पुमान् | - धृतराष्ट्र + अण् | = धार्तराष्ट्रः (१.२३) |
| सुभद्रायाः अपत्यं पुमान् | - सुभद्रा + अण् | = सौभद्रः (१.६) |
| पृथायाः अपत्यं पुमान् | - पृथा + अण् | = पार्थः (१.२६) |
| भरतस्य अपत्यं पुमान् | - भरत + अण् | = भारत (१.२४) |
| पुत्रस्य अपत्यं पुमान् | - पुत्र + अण् | = पौत्रः (१.२६) |
| दनोः अपत्यं पुमान् | - दनु + अण् | = दानवः (१०.१४) |

स्त्रीलिङ्गे तु स्त्रीप्रत्यययोगेन पार्वती, द्रौपदी, जानकी इति रूपाणि भवन्ति।

२. **ढक्प्रत्ययः** – उदा. १. – विनतायाः अपत्यम् इत्यर्थे

| | |
|---|---|
| – विनता + ढक् (ढस्य एय् आदेशः) | = वैनतेयः (१०.३०) |
| कुन्त्याः अपत्यं पुमान् – कुन्ती + ढक् | = कौन्तेयः (१.२७) |
| द्रौपद्याः अपत्यं पुमान् – द्रौपदी + ढक् | = द्रौपदेयः (१.६) |
| वृष्णेः अपत्यं पुमान् – वृष्णि + ढक् | = वार्ष्णेयः (१.४१) |

३. **इञ्प्रत्ययः** – उदा. – सोमदत्तस्य अपत्यम् इत्यर्थे

| | |
|---|---|
| – सोमदत्त + इञ् | = सौमदत्तिः (१.८) |
| सत्यकस्य अपत्यं पुमान् – सत्यक + इञ् | = सात्यकिः (१.१७) |
| दशरथस्य अपत्यं पुमान् – दशरथ + इञ् | = दाशरथिः |
| दक्षस्य अपत्यं पुमान् – दक्ष + इञ् | = दाक्षि : |

४. **ण्यप्रत्ययः** – उदा. अदितेः अपत्यम् इत्यर्थे

| | |
|---|---|
| – अदिति + ण्य | = आदित्यः (१०.२१) |
| दितेः अपत्यं पुमान् – दिति + ण्य | = दैत्यः (१०.३०) |
| आदित्यस्य अपत्यं पुमान् – आदित्य + ण्य | = आदित्यः (१०.२१) |
| प्रजापतेः अपत्यं पुमान् – प्रजापति + ण्य | = प्राजापत्यः |

११. २. यथोदाहरणं योजयत, रिक्तस्थलं च पूरयत –

| | | | |
|---|---|---|---|
| (१) धृतराष्ट्रः | (क) कृष्णः | ________ | (१०.३७) |
| (२) राधा | (ख) सीता | ________ | |
| (३) दशरथः | (ग) अभिमन्युः | ________ | (१.६) |
| (४) जनकः | (घ) कर्णः | ________ | |
| (५) सुमित्रा | (ङ) अर्जुनः | ________ | (१.२७) |
| (६) वसुदेवः | (च) हिरण्यकशिपुः | ________ | (१०.३०) |
| (७) अञ्जना | (छ) दुर्योधनः | **धार्तराष्ट्रः** | (१.२३) |
| (८) सुभद्रा | (ज) लक्ष्मणः | ________ | |
| (९) कुन्ती | (झ) हनूमान् | ________ | |
| (१०) दितिः | (ञ) रामः | ________ | |

१९. ३. यथोदाहरणं रिक्तस्थलं पूरयत –

उदा. रघोः अपत्यं पुमान् **राघवः** (**अण्**प्रत्ययः)

| | | | |
|---|---|---|---|
| १. पर्वतस्य अपत्यं स्त्री | ________ । | (________ प्रत्ययः) | |
| २. सोमदत्तस्य अपत्यं पुमान् | ________ । | (________ प्रत्ययः) | (१.८) |
| ३. पुत्रस्य अपत्यं पुमान् | ________ । | (________ प्रत्ययः) | (१.२६) |
| ४. वृष्णेः अपत्यं पुमान् | ________ । | (________ प्रत्ययः) | (१.४१) |
| ५. दक्षस्य अपत्यं पुमान् | **दाक्षिः** | (________ प्रत्ययः) | |
| ६. मनोः अपत्यं पुमान् | ________ । | (________ प्रत्ययः) | |
| ७. भगिन्याः अपत्यं पुमान् | ________ । | (________ प्रत्ययः) | |
| ८. विनतायाः अपत्यं पुमान् | ________ । | (________ प्रत्ययः) | (१०.३०) |
| ९. भरतस्य अपत्यं पुमान् | ________ । | (________ प्रत्ययः) | (१.२४) |
| १०. इरावतः अपत्यं पुमान् | ________ । | (________ प्रत्ययः) | (१०.२७) |

आ) मतुबर्थः (तद् अस्य अस्मिन् वा अस्ति)

तद् अस्य अस्मिन् वा अस्ति इत्यर्थे केचन प्रत्ययाः उक्ताः सन्ति। तत्र मतुप्प्रत्ययः आदिमः। अतः सः मतुबर्थः इति व्यवहारः। मतुप्, इनि, ठन् – इत्यादयः मतुबर्थप्रत्ययाः। तेषु केचन अत्र निरूप्यन्ते –

१. **मतुप्प्रत्ययः** – उदा. १. श्रीः अस्य अस्मिन् वा अस्ति इत्यर्थे

श्री + मतुप् = श्रीमत् (प्रातिपदिकम्) (१०.४१)

श्रीमत् इत्येतस्य पुंलिङ्गे – श्रीमान्, स्त्रीलिङ्गे – श्रीमती, नपुंसकलिङ्गे – श्रीमत् इति रूपाणि भवन्ति।

| | |
|---|---|
| विभूति + मतुप् | = विभूतिमत् (१०.४१) |
| भक्ति + मतुप् | = भक्तिमान् (१२.१७) |
| दीप्ति + मतुप् | = दीप्तिमान् (११.१७) |
| धी + मतुप् | = धीमान् (धीमता १. ३) |
| श्रुति + मतुप् | = श्रुतिमान् (१३.१३) |
| हेतु + मतुप् | = हेतुमान् (१३.४) |
| बुद्धि + मतुप् | = बुद्धिमान् (७.१०) |

अन्यानि उदाहरणानि -

उदा. २. बलम् अस्य अस्मिन् वा अस्ति इत्यर्थे

बल + मतुप्

= बल + व् + अत् (मकारस्य वकारादेशः[१])

= बलवत् (प्रातिपदिकम्) (६.३४)

बलवत् इत्येतस्य पुंलिङ्गे - बलवान्, स्त्रीलिङ्गे - बलवती, नपुंसकलिङ्गे - बलवत् इति रूपाणि भवन्ति ।

दोषः + मतुप् = दोषवत् (१८.३)

ज्ञान + मतुप् = ज्ञानवान् (३.३३)

देह + मतुप् = देहवान् (१२.५)

प्रताप + मतुप् = प्रतापवान् (१.१२)

भग + मतुप् = भगवान् (२.२)

श्रद्धा + मतुप् = श्रद्धावान् (४.३९)

सत्त्व + मतुप् = सत्त्ववान् (१०.३६)

आश्चर्य + मतुप् = आश्चर्यवत् (२.२९)

२. **इनिप्रत्ययः** - उदा. ज्ञानम् अस्य अस्मिन् वा अस्ति इत्यर्थे

ज्ञान + इनि = ज्ञानिन् (प्रातिपदिकम्) (७.१६)

ज्ञानिन् इत्येतस्य पुंलिङ्गे - ज्ञानी, स्त्रीलिङ्गे - ज्ञानिनी, नपुंसकलिङ्गे - ज्ञानि इति रूपाणि भवन्ति ।

देह + इनि = देही (२.३०)

राग + इनि = रागी (१८.२७)

योग + इनि = योगी (६.१५)

भोग + इनि = भोगी (१६.१४)

त्याग + इनि = त्यागी (१८.१०)

मौन + इनि = मौनी (१२.१९)

किरीट + इनि = किरीटी(११.३५)

शश + इनि = शशी (१०.२१)

संन्यास + इनि = संन्यासी (६.१)

संयम + इनि = संयमी (२.६९)

---

१. प्रातिपदिके अवर्णः अन्ते अस्ति । अतः मतुप्प्रत्ययस्य मकारस्य वकारादेशः । मादुपधायाश्च मतोर्वोऽयवादिभ्यः । (पा.सू. ८-२-९)

१९. ४. यथोदाहरणं तद्धितान्तानि पदानि लिखत –

| | पुं. | स्त्री. | न. | |
|---|---|---|---|---|
| उदा. – विभूतिः अस्य अस्मिन् वा अस्ति – | विभूतिमान् | विभूतिमती | विभूतिमत् | (१०.४१) |
| १. भक्तिः अस्य अस्मिन् वा अस्ति – | | | | (१२.१७) |
| २. दोषः अस्य अस्मिन् वा अस्ति – | | | | (१८.३) |
| ३. दीप्तिः अस्य अस्मिन् वा अस्ति– | | | | (११.१७) |
| ४. ज्ञानम् अस्य अस्मिन् वा अस्ति – | | | | (३.३३) |
| ५. धीः अस्य अस्मिन् वा अस्ति – | | | | (१.३) |
| ६. प्रतापः अस्य अस्मिन् वा अस्ति – | | | | (१.१२) |
| ७. बुद्धिः अस्य अस्मिन् वा अस्ति – | | | | (७.१०) |
| ९. श्रद्धा अस्य अस्मिन् वा अस्ति – | | | | (४.३९) |
| १०. हेतुः अस्य अस्मिन् वा अस्ति – | | | | (१३.४) |
| ११. भगः अस्य अस्मिन् वा अस्ति – | | | | (२.२) |

१९. ५. यथोदाहरणं तद्धितान्तानि पदानि लिखत –

उदा. – दण्डः अस्य अस्ति इति – **दण्डी** / **दण्डवान्**

१. देहः अस्य अस्ति इति – ________ / ________ (२.३०)

२. रागः अस्य अस्ति इति – ________ / ________ (१८.२७)

३. भोगः अस्य अस्ति इति – ________ / ________ (१६.१४)

४. त्यागः अस्य अस्ति इति – ________ / ________ (१८.१०)

५. मौनम् अस्य अस्ति इति – ________ / ________ (१२.१९)

६. किरीटम् अस्य अस्ति इति – ________ / ________ (११.३५)

७. संन्यासः अस्य अस्ति इति – ________ / ________ (६.१)

८. शशः अस्य अस्ति इति – ________ / ________ (१०.२१)

९. संयमः अस्य अस्ति इति – ________ / ________ (२.६९)

३. भावार्थः (तस्य भावः)

भावार्थे त्व, तल्, ष्यञ्,.. इत्यादयः बहवः प्रत्ययाः सन्ति। तेषु कांश्चन प्रत्ययान् परिशीलयाम –

१ **त्वप्रत्ययः** – उदा. शत्रोः भावः इत्यर्थे शत्रु + त्व = शत्रुत्वम् (६.६)
सत् + त्व = सत्त्वम् (१०.३६.)
महत् + त्व = महत्त्वम्
अमानि + त्व = अमानित्वम् (१३.७)
अदम्भि + त्व = अदम्भित्वम् (१३.७)

२. **तल्प्रत्ययः** – उदा. देवस्य भावः देव + तल्
= देवता (स्त्रीत्वं लोकात्)
सम + त = समता (१०.५)

३. **ष्यञ्प्रत्ययः** – उदा. – दुर्बलस्य भावः दुर्बल + ष्यञ्
दौर्बल् + य = दौर्बल्यम्) (२.३)
क्लीब + ष्यञ् = क्लैब्यम् (२.३)
समर्थ + ष्यञ् = सामर्थ्यम् (२.३६)
शूर + ष्यञ् = शौर्यम् (१८.४३)
स्थिर + ष्यञ् = स्थैर्यम् (१३.७)
विराग + ष्यञ् = वैराग्यम् (१३.९)
कृपण + ष्यञ् = कार्पण्यम् (२.७)
प्रधान + ष्यञ् = प्राधान्यम् (१०.१९)
सुम + ष्यञ् = सौम्यम् (११.५०)
दक्ष + ष्यञ् = दाक्ष्यम् (१८.४३)
वणिक् + ष्यञ् = वाणिज्यम् (१८.४४)
सूक्ष्म + ष्यञ् = सौक्ष्म्यम् (१३.३२)

४ **अण्प्रत्ययः** – उदा. – यूनः भावः
युवन् + अण् = यौवनम् (२.१३)

५ **अञ्प्रत्ययः** – उदा. – कुमारस्य भावः
= कुमार + अञ् = कौमारम् (२.१३)

१९. ६. यथोदाहरणं तद्धितान्तानि पदानि लिखत –

उदा. – **शूरस्य भावः** – **शूरत्वम् (१८.४३) शूरता** **शौर्यम्**

१. एकस्य भावः – ______ (९.१५) ______ ______

२. प्रधानस्य भावः – ______ (१०.१९) ______ ______

३. कृपणस्य भावः – ______ (२.७) ______ ______

४. निष्कर्मणः भावः – ______ ______ ______ (३.४)

५. क्लीबस्य भावः – ______ ______ ______ (२.३)

६. त्रिगुणस्य भावः – ______ ______ ______ (२.४५)

७. दक्षस्य भावः – ______ ______ ______ (१८.४३)

८. समस्य भावः – ______ ______ ______ (१०.५)

९. स्थिरस्य भावः – ______ ______ ______ (१३.७)

१२. विरागस्य भावः – ______ ______ ______ (१३.८)

४. इदमर्थः – **अण्प्रत्ययः** –

उदा – १. शरीरस्य इदम् इत्यर्थे
शरीर + अण् = शारीरम्) (१७.१४)
अन्यानि उदाहरणानि – साङ्ख्यम् (२.३९)

उदा – २. मम अयम्
= अस्मद् + अण्
= ममक + अण् (अस्मद् इति प्रातिपदिकस्य ममकादेशः )
= मामकः (१.१)
तव अयम् – तावकः

५. पित्रर्थः – **डामहच्प्रत्ययः**

उदा. – – पितुः पिता इत्यर्थे
पितृ + आमह = पितामह (१.१२) / पितामही
– मातृ + आमह = मातामहः / मातामही

तद्धितान्तानि अव्ययानि –

सर्वनामशब्दैः साकं था, त्र, तः , दा,... इत्यादीनां तद्धितप्रत्ययानां योजनेन अव्ययानि सिध्यन्ति ।

उदा. यत् – यथा, यत्र, यतः, यदा
तत् – तथा, तत्र, ततः, तदा
सर्व – सर्वथा, सर्वत्र, सर्वतः, सर्वदा
किम् – कथम्, कुत्र, कुतः, कदा, क्व

व्याकरणे तद्धितप्रकरणम् अत्यन्तं विस्तृतम् । तद्धितप्रत्ययाः बहवः सन्ति । प्रधानाः केचन एव अत्र उदाहृताः । रूपसाम्यमात्रं मनसि निधाय यस्य कस्यापि शब्दस्य यस्य कस्यचित् तद्धितप्रत्ययस्य योजनं न कर्तव्यम्, येन दोषाः सम्भवेयुः । अधिकज्ञानाय व्याकरणपुस्तकम् आश्रयणीयम् ।

# २०. अन्वयरचना

## अन्वयरचना

काव्यानि गद्यमयानि पद्यमयानि गद्यपद्यमयानि वा भवन्ति। संस्कृते अधिकानि काव्यानि पद्यमयानि। पद्यानि यत्किञ्चन वृत्तम् आश्रित्य लिखितानि भवन्ति। तेषु पदानि गद्ये इव क्रमबद्धानि न भवन्ति। (गद्येऽपि क्वचित् तानि क्रमबद्धानि न भवन्ति।) अतः तेषाम् अर्थावगमने कश्चन क्लेशः अनुभूयते। एतादृशानां पद्यानाम् (गद्यानां वा) अर्थावगमनाय सरलः कश्चन क्रमः आश्रीयते। सः अन्वयक्रमः इत्युच्यते। काव्येषु प्रायः पदानि सन्धिं कृत्वा लिखितानि भवन्ति। अन्वयक्रमचिन्तनाय आदौ सन्धिविच्छेदः करणीयः भवति। एतावता सन्धिज्ञानं भवद्भिः प्राप्तम् अस्ति एव।

अन्वयरचनायाम् एतानि सोपानानि भवितुम् अर्हन्ति –

→ आदौ वाक्यस्थानि पदानि सन्धिविच्छेदं कृत्वा लेखनीयानि।

→ ततः वाक्ये क्रियापदं किम् इति ज्ञातव्यम्।

→ ततः कर्तृपदं किम् कर्मपदं च किम् इति ज्ञातव्यम्।
कर्तृपदं किम् इति ज्ञातुं क्रियापदम् उद्दिश्य कः ? / का ? / किम् ? (प्रथमाविभक्तिः) इति प्रश्नः करणीयः।
कर्मपदं किम् इति ज्ञातुं क्रियापदम् उद्दिश्य कं ? / कां ? / किम् ? (द्वितीयाविभक्तिः) इति प्रश्नः करणीयः।

→ तत्पश्चात् मातृभाषायाम् इव कर्तृपदं, ततः कर्मपदं, ततः क्रियापदं च इति क्रमेण पदानि योजनीयानि।
तावता वाक्यस्य स्वरूपं तात्पर्यं च प्रायः ज्ञाते भवतः।

एकम् उदाहरणं परिशीलयाम –

**वाक्यमुवाच मधुसूदनः।** (२.१)

वाक्यम् उवाच मधुसूदनः। (पदविभागः कृतः अस्ति।)
उवाच (क्रियापदम्)
– कः उवाच ? मधुनूदनः उवाच। (मधुसूदनः इति कर्तृपदम्)
– किम् उवाच ? वाक्यम् उवाच। (वाक्यम् इति कर्मपदम्)
– मधुसूदनः वाक्यम् उवाच। (कर्तृपदं कर्मपदं क्रियापदं च क्रमेण लिखितानि सन्ति।)
श्रीकृष्णः वचनम् उक्तवान् इत्यर्थः।

एतेन क्रमेण अन्वयरचनायाः लेखने शब्दानाम् अन्त-लिङ्ग-विभक्ति-वचनानां ज्ञानम् अपेक्षितं भवति।

आदौ केषाञ्चित् गद्यात्मकवाक्यानाम् अन्वयरचनां जानीम –

**१. आसीत्पुरायोध्यायां दशरथो नाम भूपतिः।**

पदविभागः – आसीत् पुरा अयोध्यायां दशरथः नाम भूपतिः।
क्रियापदम् – आसीत्
कः आसीत् ? भूपतिः आसीत्।
को नाम भूपतिः आसीत् ? दशरथः नाम भूपतिः आसीत् ?

कुत्र आसीत् ? अयोध्यायाम् आसीत् ?

कदा आसीत् ? पुरा आसीत् ।

अन्वयः - पुरा अयोध्यायाम् दशरथः नाम भूपतिः आसीत् ।

**२. अस्ति गङ्गानद्यास्तीरे शाल्मलीतरुर्विशालः ।**

पदविभागः - अस्ति गङ्गानद्याः तीरे शाल्मलीतरुः विशालः ।

क्रियापदम् - अस्ति ।

कः अस्ति ? शाल्मलीतरुः अस्ति ।

कीदृशः शाल्मलीतरुः अस्ति ? - विशालः शाल्मलीतरुः अस्ति ।

शाल्मलीतरुः कुत्र अस्ति ? - शाल्मलीतरुः तीरे अस्ति ।

कस्याः तीरे अस्ति ? - गङ्गानद्याः तीरे अस्ति ।

अन्वयः - गङ्गानद्याः तीरे विशालः शाल्मलीतरुः अस्ति ।

**३. यान्ति गोपालकास्सर्वे धेनूश्चारयितुं वनम् ।**

पदविभागः - यान्ति गोपालकाः सर्वे धेनूः चारयितुं वनम् ।

क्रियापदम् - यान्ति ।

के यान्ति ? - गोपालकाः यान्ति ।

कीदृशाः गोपालकाः यान्ति ? - सर्वे गोपालकाः यान्ति ।

गोपालकाः कुत्र यान्ति ? - गोपालकाः वनं यान्ति ।

गोपालकाः किमर्थं यान्ति ? - गोपालकाः चारयितुं यान्ति ।

गोपालकाः काः चारयितुं यान्ति ? गोपालकाः धेनूः चारयितुं यान्ति ।

अन्वयः - सर्वे गोपालकाः धेनूः चारयितुं वनं यान्ति ।

एतेषाम् उदाहरणानाम् अवलोकनेन भवन्तः इदानीम् अन्वयरचनां कर्तुं कीदृशाः प्रश्नाः करणीयाः इति ज्ञातवन्तः । ते एव अंशाः अत्र संगृहीताः सन्ति -

→ कर्तृपदं कर्मपदं वा उद्दिश्य 'कीदृशः' इति प्रश्नः क्रियते चेत् विशेषणपदस्य ज्ञानं भवति ।

यथा - कीदृशः शाल्मलीतरुः ? - विशालः ।

→ सप्तमीविभक्तिपदानां ज्ञानाय 'कुत्र' इति प्रश्नः करणीयः ।

यथा - शाल्मलीतरुः कुत्र आसीत् ? - गङ्गानद्याः तीरे

→ काल-समयसूचकानां पदानां ज्ञानाय 'कदा' इति प्रश्नः करणीयः ।

यथा - दशरथो नाम राजा कदा आसीत् ? - पुरा

## अभ्यासः

१. कानिचन वाक्यानि अत्र सन्ति। पदविभागं कृत्वा तानि अन्वयक्रमेण लिखत –

१. आसीद्द्रोणो नाम विख्यातः धनुर्वेदाचार्यः।

________________________________________।

२. सन्ति वृक्षेष्वनेकानि फलानि मधुराणि।

________________________________________।

३. भगवद्गीतान्तर्भवति भीष्मपर्वणि महाभारतस्थे।

________________________________________।

४. अस्ति संस्कृतभाषा भारतीयभाषाणां सर्वासां जननी।

________________________________________।

५. उद्यानेऽस्मिन् विलसन्ति पुष्पाणि सुन्दराणि।

________________________________________।

६. करोम्यहं संस्कृतसेवनं सदा।

________________________________________।

गद्यात्मकवाक्यानाम् अन्वयरचनां वयं ज्ञातवन्तः। अधुना पद्यानाम् अन्वयरचनां जानीम। यस्य कस्यापि पद्यस्य सम्पूर्णभावस्य अवगमनाय चत्वारः अंशाः अवश्यं ज्ञातव्याः भवन्ति।

ते च –

**१. पदविभागः २. अन्वयः ३. अन्वयार्थः ४. तात्पर्यार्थः**

आद्ययोः द्वयोः परिचयः एतावता एव भवद्भिः प्राप्तः। पदविभागकरणस्य अन्वयक्रमेण तेषां लेखनस्य च पश्चात् प्रत्येकं शब्दस्य अर्थः चिन्तनीयः अस्ति। अयम् अंशः अन्वयार्थः इति उच्यते। अन्वयार्थज्ञानेन पद्यस्य भावं वयं पूर्णतः अवगन्तुं शक्नुमः। सः तात्पर्यार्थः इत्युच्यते।

**अन्वये विशेषः –**

अन्वयकरणार्थम् आदौ पद्ये क्रियापदं किमिति ज्ञातव्यम् इति पूर्वमेव उक्तम्। केषुचित् पद्येषु द्वित्राणि क्रियापदानि भवेयुः। तत्र कदाचित् तावन्ति वाक्यानि भवितुम् अर्हन्ति, कदाचित् एकं क्रियापदं प्रधानम् अन्यानि अप्रधानानि भवितुम् अर्हन्ति। तदा प्रधानक्रियापदं किमिति अभिज्ञातव्यम्। अप्रधानानि क्रियापदानि तस्य अङ्गभूतानि एव भवितुमर्हन्ति। तन्नाम तेषामपि कर्तृकर्मादिकं भवितुमर्हति। तत्र सर्वेषामपि मेलनेन एकमेव मुख्यं वाक्यं सिद्धं भवति।

पद्ये विद्यमानानि पदानि विभक्तिशः योजनीयानि। समानविभक्त्यन्तेषु प्रायः एकं विशेष्यम् अन्यानि तस्य विशेषणानि च भवन्ति।

क्रियापदम् उद्दिश्य केन / कया इति प्रश्नः कृतश्चेत् तृतीयाविभक्त्यन्तं पदं, कस्मै / कस्यै इति प्रश्नः कृतश्चेत् चतुर्थीविभक्त्यन्तं पदं, कस्मात् / कस्याः इति प्रश्नः कृतश्चेत् पञ्चमीविभक्त्यन्तं पदं च अवगन्तुं शक्नुमः।

क्रियापदम् उद्दिश्य किं कृत्वा इति प्रश्ने कृते क्त्वान्तं / ल्यबन्तं पदं, किं कर्तुम् इति प्रश्ने कृते तुमुन्नन्तं पदं च अवगन्तुं शक्नुमः।

पद्ये सम्बोधनपदं यदि भवति तर्हि तत् आदौ लेखनीयम्।

यदि पद्ये क्रियापदमेव न निर्दिष्टं तर्हि अस्ति इत्यस्य भवति इत्यस्य वा क्रियापदस्य अध्याहारः करणीयः।

एतान् अंशान् मनसि निधाय अधुना उदाहरणत्वेन एकस्य पद्यस्य अन्वयरचनां करवाम –

**व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम्।**
**पराशरात्मजं वन्दे शुकतातं तपोनिधिम्॥**

पदविभागः – व्यासम्, वसिष्ठनप्तारम्, शक्तेः, पौत्रम्, अकल्मषम्, पराशरात्मजम्, वन्दे, शुकतातम्, तपोनिधिम्।

क्रियापदम् – वन्दे

द्वितीयाविभक्त्यन्तानि पदानि – व्यासम्, वसिष्ठनप्तारम्, पौत्रम्, अकल्मषम्, पराशरात्मजम्, शुकतातम्, तपोनिधिम्।

षष्ठीविभक्त्यन्तं पदम् – शक्तेः (अस्य पौत्रः इत्यनेन अन्वयः।)

**अन्वयरचना**

वन्दे
कं वन्दे ? – व्यासं वन्दे।
कीदृशं व्यासं वन्दे ? – वसिष्ठनप्तारं व्यासं वन्दे।
पुनः कीदृशं वन्दे ? पौत्रम्
कस्य पौत्रम् ? शक्तेः पौत्रम्।
पुनः कीदृशं वन्दे ? अकल्मषम्
पुनः कीदृशं वन्दे ? पराशरात्मजम्
पुनः कीदृशं वन्दे ? शुकतातम्
पुनः कीदृशं वन्दे ? तपोनिधिम्

अन्वयः – वसिष्ठनप्तारं शक्तेः पौत्रं पराशरात्मजं शुकतातम् अकल्मषं तपोनिधिं व्यासं वन्दे।

तात्पर्यम् – व्यासमहर्षिः वसिष्ठस्य नप्ता। शक्तिमहर्षेः पौत्रः। पराशरस्य पुत्रः। शुकमहर्षेः पिता। सः कल्मषरहितः तपोनिधिश्च। तम् अहं नमस्करोमि।

अनेनैव क्रमेण एतस्य पद्यस्य अन्वयरचनां कुरुत –

**वसुदेवसुतं देवं कंसचाणूरमर्दनम्।**
**देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम्॥**

लघूनां पद्यानां यथा तथा महतां पद्यानाम् अपि अन्वयरचना अनेन एव क्रमेण करणीया ।

उदाहरणद्वयं दर्श्यते –

**प्रथमवयसि पीतं तोयमल्पं स्मरन्तः शिरसि निहितभारा नारिकेला नराणाम् ।**
**उदकममृतकल्पं दद्युराजीवितान्तं न हि कृतमुपकारं साधवो विस्मरन्ति ॥**

पदविभागः – प्रथमवयसि, पीतम्, तोयम्, अल्पम्, स्मरन्तः, शिरसि, निहितभाराः, नारिकेलाः, नराणाम्, उदकम्, अमृतकल्पम्, दद्युः, आजीवितान्तम्, न हि कृतम्, उपकारम्, साधवः, विस्मरन्ति ।

क्रियापदे – दद्युः, विस्मरन्ति

प्रथमाविभक्तिः – स्मरन्तः, निहितभाराः, नारिकेलाः, साधवः

द्वितीयाविभक्तिः – पीतम्, तोयम्, अल्पम्, उदकम्, अमृतकल्पम्, आजीवितान्तम्, कृतम्, उपकारम्

सप्तमीविभक्तिः – प्रथमवयसि, शिरसि

षष्ठीविभक्तिः – नराणाम्

**अन्वयरचना –**

क्रियापदम् – दद्युः

के दद्युः ? नारिकेलाः दद्युः ।

कदा दद्युः ? जीवितान्तं दद्युः ।

केषां दद्युः ? नराणां दद्युः ।

कीदृशाः नारिकेलाः ? निहितभाराः नारिकेलाः ।

कुत्र निहितभाराः ? शिरसि निहितभाराः ।

किं कुर्वन्तः नारिकेलाः ? स्मरन्तः नारिकेलाः ।

किं स्मरन्तः ? तोयं स्मरन्तः ।

कीदृशं तोयं स्मरन्तः ? अल्पं तोयं स्मरन्तः ।

कथम्भूतं तोयं स्मरन्तः ? पीतं तोयं स्मरन्तः ।

कदा पीतम् ? प्रथमवयसि पीतम् ।

नारिकेलाः किं दद्युः ? उदकं दद्युः ।

कीदृशम् उदकं दद्युः ? अमृतकल्पम् उदकं दद्युः ।

न हि विस्मरन्ति – क्रियापदम्

के न विस्मरन्ति ? – साधवः न हि विस्मरन्ति ।

साधवः किं न विस्मरन्ति ? उपकारं न विस्मरन्ति ।

कथम्भूतम् उपकारम् ? कृतम् उपकारम् ।

अन्वयः – प्रथमवयसि पीतम् अल्पं तोयं स्मरन्तः शिरसि निहितभाराः नारिकेलाः नराणाम् अमृतकल्पम् उदकम् आजीवितान्तं दद्युः । साधवः कृतम् उपकारं न हि विस्मरन्ति ।

तात्पर्यम् – मनुष्याः नारिकेलसस्यानि आरोपयन्ति । कञ्चित् कालं यावत् तेभ्यः जलं च यच्छन्ति । तानि सस्यानि यदा वृक्षाः भवन्ति तदा ते नारिकेलवृक्षाः पूर्वं मनुष्यैः दत्तम् अल्पमपि जलं स्मरन्तः स्वशिरसा महान्तं भारं वहन्तः अमृतसमानं जलं तेभ्यः आजीवनं यच्छन्ति । सत्पुरुषाः अन्यैः कृतम् अल्पमपि उपकारम् आजीवनं न विस्मरन्ति ।

अन्वयरचनायाम् अन्येऽपि विशेषाः –

→ न इत्येतत् अभावार्थकम् अव्ययम् । तस्य अन्वयः क्रियापदेन एव भवति । अतः क्रियापदेन सह तद् योजयित्वा एव प्रश्नः करणीयः ।

→ पद्ये यदि तदा, तु, एव, हि, अपि, च – इत्यादीनि अव्ययानि भवन्ति तर्हि अर्थानुगुणं तानि अन्यशब्दैः सह योजनीयानि ।

→ पद्ये यदि क्तप्रत्ययान्तं रूपं भवति तर्हि तदुद्दिश्य प्रश्नकरणे 'कथम्भूतः' इति शब्दस्य प्रयोगः क्रियते ।

→ पद्ये यदि शतृप्रत्ययान्तं रूपं भवति तर्हि तेन सह किंशब्दस्य प्रयोगेण प्रश्नः करणीयः ।

यथा – स्मरन्तः, किं कुर्वन्तः ?

उदाहरणम् – २.

**खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके**
**वाञ्छन् देशमनातपं विधिवशात्तालस्य मूलं गतः ।**
**तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः**
**प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥**

पदविभागः – खल्वाटः, दिवसेश्वरस्य, किरणैः, सन्तापितः, मस्तके, वाञ्छन्, देशम्, अनातपम्, विधिवशात् , तालस्य, मूलम्, गतः, तत्र, अपि, अस्य, महाफलेन, पतता, भग्नम्, सशब्दम्, शिरः, प्रायः, गच्छति, यत्र, भाग्यरहितः, तत्रैव, यान्ति, आपदः ।

क्रियापदानि – गतः, भग्नम्, गच्छति, यान्ति

प्रथमाविभक्तिः – खल्वाटः, सन्तापितः, वाञ्छन्, शिरः, भाग्यरहितः, आपदः ।

द्वितीयाविभक्तिः – देशम्, अनातपम्, मूलम्,

तृतीयाविभक्तिः – किरणैः, महाफलेन, पतता ।

पञ्चमीविभक्तिः – विधिवशात्

षष्ठीविभक्तिः – दिवसेश्वरस्य, तालस्य, अस्य,

सप्तमीविभक्तिः – मस्तके

अव्ययानि – तत्र, अपि, प्रायः, तत्र, एव ।

क्रियाविशेषणम् – सशब्दम्

**अन्वयरचना –**

गतः– क्रियावाचकं भूतकृदन्तरूपम् (क्त)

कः गतः ? – खल्वाटः गतः ।

कीदृशः खल्वाटः ? सन्तापितः खल्वाटः ।

कैः सन्तापितः ? – किरणैः सन्तापितः ।

कस्य किरणैः सन्तापितः ? दिवसेश्वरस्य किरणैः सन्तापितः ।

किरणैः कुत्र सन्तापितः ? मस्तके सन्तापितः ।

खल्वाटः किं कुर्वन् गतः ? वाञ्छन् गतः ।

कं वाञ्छन् गतः ? देशं वाञ्छन् गतः ।

कीदृशं देशं वाञ्छन् गतः ? अनातपं देशं वाञ्छन् गतः ।

कुत्र गतः ? मूलं गतः । कस्य मूलम् ? तालस्य मूलम् ।

कस्मात् गतः ? विधिवशात् गतः ।

भग्नम् – क्रियावाचकं भूतकृदन्तरूपम् (क्त)

किं भग्नम् ? शिरः भग्नम् ।

कस्य शिरः ? अस्य शिरः ।

कथं भग्नम् ? सशब्दं भग्नम् ।

केन भग्नम् ? महाफलेन भग्नम् ।

कीदृशेन फलेन ? पतता महाफलेन ।

गच्छति – क्रियापदम्

कः गच्छति ? – भाग्यरहितः गच्छति ।

यान्ति – क्रियापदम्

काः यान्ति ? आपदः यान्ति ।

कुत्र यान्ति ? तत्र यान्ति यत्र भाग्यरहितः गच्छति ।

कथं यान्ति ? प्रायः यान्ति ।

अन्वयः – खल्वाटः दिवसेश्वरस्य किरणैः मस्तके सन्तापितः अनातपं देशं वाञ्छन् तालस्य मूलं गतः । तत्र अपि पतता महाफलेन अस्य शिरः सशब्दं भग्नम् । प्रायः भाग्यरहितः यत्र गच्छति तत्र एव आपदः यान्ति ।

तात्पर्यम् – कश्चन खल्वाटः सूर्यकिरणैः शिरसि भृशं सन्तापितः अभवत् । सः आतपरहितं स्थानम् इच्छन् विधिवशात् कस्यचित् तालवृक्षस्य मूलं गतवान् । तदा एव तस्य शिरसि तस्य वृक्षस्य महाफलं किञ्चन अपतत् येन खल्वाटस्य शिरः सशब्दं भग्नम् अभवत् । प्रायेण भाग्यरहितः यत्र गच्छति तत्रैव आपदः अपि गच्छन्ति ।

अन्वयरचनायाम् अन्येऽपि विशेषाः –

– यत्र तत्र, यावत् तावत्, यदा तदा – इत्यादीनि नित्यसम्बन्धीनि पदानि । तेषां प्रयोगेण द्वयोः वाक्ययोः एकवाक्यत्वेन योजनं क्रियते । यथा – यत्र भाग्यरहितः गच्छति तत्र आपदः यान्ति ।

विशेषसूचना –

प्रतिपदम् उद्दिश्य अनेन क्रमेण प्रश्नं कृत्वा उत्तरं प्राप्नुवन्तः अन्वयं रचयामः यत् इयं पद्धतिः आकांक्षापद्धतिः इति उच्यते । गीताप्रवेशस्य द्वितीयभागे गीताश्लोकानाम् आकांक्षापद्धत्या अन्वयरचना एव प्रधानतया दत्ता अस्ति ।

## परिशिष्टम् – १

### कटपयादिसंख्या

पुरा भारते गणितस्य प्राधान्यम् आसीत्। तस्य श्लोकरूपेण प्रतिपादनं भवति स्म। तदर्थं संख्यानां प्रतिपादने केचन क्रमाः आविष्कृताः। तेषु 'कटपयादिसंख्या' कश्चित् क्रमः। ककारादीनाम् एवम्प्रकारेण संख्या निर्दिष्टा वर्तते –

| | | | | |
|---|---|---|---|---|
| क् (१) | ख् (२) | ग् (३) | घ् (४) | ङ् (५) |
| च् (६) | छ् (७) | ज् (८) | झ् (९) | ञ् (०) |
| ट् (१) | ठ् (२) | ड् (३) | ढ् (४) | ण् (५) |
| त् (६) | थ् (७) | द् (८) | ध् (९) | न् (०) |
| प् (१) | फ् (२) | ब् (३) | भ् (४) | म् (५) |
| य् (१) | र् (२) | ल् (३) | व् (४) | |
| श् (५) | ष् (६) | स् (७) | ह् (८) | केवलस्वराः (०) |

अत्र ककारादीनाम् अक्षराणाम् एकैकसंख्यां प्रकल्प्य पदनिर्माणं क्रियते। एतदनुसारेण शतादिसंख्याबोधनार्थं किञ्चित् पदं प्रकल्प्यते।

क् ट् प् य् एतानि व्यञ्जनानि '१' संख्याङ्कितानि। ख् ठ् फ् र् एतानि व्यञ्जनानि '२' संख्याङ्कितानि। ततः क्रमेण अन्यानि व्यञ्जनानि संख्यान्तरेण अङ्कितानि। अतः अस्य क्रमस्य नाम 'कपटयादिसंख्या' इति। स्वरस्य योगे सति व्यञ्जनानां संख्यान्तरबोधकत्वं न भवति। यथा – य या यि यी .... = १। संयुक्ताक्षरे अन्तिमः व्यञ्जनवर्णः परिगणनीयः। यथा – प्र ग्र र = २।

कानिचन उदाहरणानि प्रदर्श्यन्ते – 'महाभारत' इति शब्दो वर्तते। तत्र पञ्च अक्षराणि सन्ति। तेषु म=५, हा=८, भा=४, र=२, त=६, संख्याः इति। तेन पदेन ५८४२६ संख्या सिद्ध्यति। किन्तु 'संख्यानां वामतो गतिः' इति नियमात् ६२४८५ इत्येषा संख्या प्राप्यते। एषा 'महाभारत' शब्दात् कटपयादिसंख्याक्रमेण प्राप्ता संख्या। 'जय' इति शब्दे ज=८ य=१ इति कटपयादिसंख्याक्रमेण १८ सिध्यति।

ग्रन्थऋणम् –

१. श्रीमद्भगवद्गीता पदार्थान्वयबोधिनी – G.S.R. Narasimhamurthy and A. Someswarasarma, Kanchi Kamakotipeetham, Kancheepuram, T.N.
२. गीता का शब्दकोश – डा. रत्नाकर नराले, प्रभात प्रकाशन, दिल्ली
३. गीतादर्शन – डा. रत्नाकर नराले, प्रभात प्रकाशन, दिल्ली
४. श्रीमद्भगवद्गीतामयंक – स्वामी गोपाल मुनि, नीता प्रकाशन, नई दिल्ली – ११० ०४९
५. संस्कृतभाषादीपिका (तृतीया) एन्. रङ्गनाथशर्मा, सुरसरस्वतीसभा, शृङ्गगिरिः
६. श्रीमद्भगवद्गीता – शाङ्करभाष्य हिन्दी–अनुवाद–सहित, गीताप्रेस्, गोरखपुर

# उत्तराणि

१. नारायणं नमस्कृत्य...

१.१. १. श्रीमद्भगवद्गीता महाभारतग्रन्थे अन्तिर्गतः भागः।
२. गीताभागः महाभारतस्य भीष्मपर्वणि अस्ति।
३. मनुष्येषु श्रेष्ठः अर्जुनः।
४. महाभारतग्रन्थस्य पूर्वतनं नाम 'जयः' इति।
५. महाभारतम् इति नाम्ना विख्यातम् अभवत्।
६. महाभारते अष्टादशसंख्यायाः अतीव प्राशस्त्यम् अस्ति।

१.२. १, २, ३, ४. – अष्टादश।

१.३. ........

१.४. मनुष्येषु श्रेष्ठम्, सरस्वतीं, नमस्कृत्य, जयः, वानम्।

१.५. १. चैव – च + एव २. नरोत्तमम् – नर + उत्तमम्
३. ततो – ततः ४. जयमुदीरयेत् – जयम् + उदीरयेत्
५. नारायणं – नारयणम् ६. सरस्वतीं – सरस्वतीम्
७. नरं – नरम् ८. देवीं – देवीम्

१.६. ..........

१.७. १. आदेशः २. आगमः ३. लोपः ४. आदेशः ५. आदेशः
६. लोपः ७. लोपः ८. प्रकृतिभावः ९. प्रकृतिभावः
१०. प्रकृतिभावः ११. प्रकृतिभावः

१.८. षष्ठे अध्याये

१.९. १. अनार्यजुष्टम् + अस्वर्ग्यम् + अकीर्तिकरम् + अर्जुन
२. आचार्यान्+मातुलान्+भ्रातॄन्+पुत्रान्+पौत्रान्+सखीन्
३. यत् + तत् + तामसम् + उच्यते
४. संवादम् + इमम् + अश्रौषम् + अद्भुतम्
५. योगेश्वरात् + कृष्णात् + साक्षात् + कथयतः

१.१०.१. स्वरसन्धिः २. स्वरसन्धिः ३. व्यञ्जनसन्धिः
४. व्यञ्जनसन्धिः ५. व्यञ्जनसन्धिः ६. व्यञ्जनसन्धिः
७. विसर्गसन्धिः ८. विसर्गसन्धिः ९. विसर्गसन्धिः
१०. स्वरसन्धिः

२. सञ्जय उवाच

२.१. ............

२.२. अ, आ, अ + ए, आ + ए

२.३. १. विद्यार्थीव २. तासूत्तमा ३. ब्रह्माक्षरसमुद्भवम्
४. प्रतिष्ठाहम् ५. पश्यतीश्वरः ६. मूढग्राहेणात्मनः
७. सुष्टुचुः ८. मनःषष्ठानीन्द्रियाणि

२.४. १. अचिरेण + अधिगच्छति २. अङ्गानि + इव
३. मया + अध्यक्षेण ४. तस्य + आराधनम्
५. वहति + ईशः ६. कुर्वती + इति

२.५. १. देव + ऋषिः २. परया + उपेताः
३. मद्भावाय + उपपद्यते ४. सन्नियम्य + इन्द्रियग्रामम्
५. परमात्मा + इति ६. इन्द्रियस्य + इन्द्रियस्यार्थे
७. तथा + उपलभ्यते

२.६. १. त्वयोक्तम् २. काकोलूकौ ३. एवोपजुह्वति
४. परमात्मेव ५. ज्ञात्वोपास्य ६. नरकस्येदम् ७. सप्तर्षयः

२.७. १. नरकायैव २. इहैकस्थम् ३. सुखस्यैकान्तिकस्य
४. मयैवैते ५. गृहीत्वैतानि

२.८. १. इति + उदाहृतः २. सम्भवामि + आत्ममायया
३. यजन्ति + अविधिपूर्वकम् ४. दुःखेषु + अनुद्विग्नमनाः
५. अस्तु + इष्टकामधुक्

२.९. १. भवत्यल्पमेधसाम् २. इन्द्रियाण्यादौ ३. इत्युपधारय
४. मोहयत्येषः ५. कर्मस्वनुषज्जते ६. धात्रोजः
७. क्षिपाम्यजस्रम् ८. सरस्वत्यैश्वर्यम् ९. वक्त्रौदासीन्यम्

२.१०.१. भूमौ + असपत्नम् २. नायकः ३. पावकः

२.११.१. यान्तवान्तादेशसन्धिः २. गुणसन्धिः ३. वृद्धिसन्धिः
४. पूर्वरूपसन्धिः ५.वृद्धिसन्धिः ६. सवर्णदीर्घसन्धिः
७. सवर्णदीर्घसन्धिः ८. यणसन्धिः ९. पूर्वरूपसन्धिः
१०. यान्तवान्तादेशसन्धिः ११. गुणसन्धिः १२. यणसन्धिः

२.१२.१. अ + अ = आ २. इ + अ = य् + अ ३. अ + ए = ऐ
४. उ + अ = व् + अ ५. आ + उ = ओ ६. आ + आ = आ
७. अ + ए = ऐ ८. उ + उ = ऊ ९. अ + ए = ऐ
१०. ए + अ = एऽ

२.१३ १. येन + आत्मा + एव + आत्मना
२. कुरुते + अर्जुन ३. अचिरेण + अधिगच्छति
४. द्रक्ष्यसि + आत्मनि + अथो
५. पश्यन्ति + आत्मनि + अवस्थितम्
६. सिद्धौ + असिद्धौ ७. द्वौ + इमौ
८. च + औषधीः
९. परमात्मा + इति + उदाहृतः २०. यथा + उल्बेन + आवृतो

२.१४. १. अपरिहार्येऽर्थे २. आत्मैव ३. उपविश्यासने

४. ब्रह्मार्पणम्   ५. मनःषष्ठानीन्द्रियाणि ६. यथैधांसि
७. प्लवेनैव ८. त्वयोक्तम् ९. राजसस्येष्टाः १०. उभावपि

२.१६. १. (घ) इ + अ = य् + अ २. (ज) इ + ए = य् + ए
३. (ञ) उ + अ = व् + अ ४. (क) औ + अ = आव् + अ
५. (ख) अ + इ = ए   ६. (झ) अ + उ = ओ
७. (ग) अ + ए = ऐ   ८. (ङ) आ + ए = ऐ
९. (छ) आ + अ = आ   १०. (च) आ + आ = आ

## ३. अपकारिणामपि उपकारः

३.१. १. हरिश्शेते २. स्याज्जनार्दन ३. बृहच्छिद्रम् ४. यच्चन्द्रमसि
५. मृच्छकटिका ६. योगाच्चलितमानसः ७. उज्ज्वलति
८. स्वपञ्छ्वसन् ९. विद्यार्थिञ्जानीहि   १०. सच्चित्

३.२. १. तट्टीका   २. डम्बरः   ३. टङ्कनम्
४. पक्षिण्टिट्टिभ ५. ढक्का   ६. आविस्
७. धनवान्षष्ठः ८. सत् + टिप्पणी   ९. उत् + डयनम्

३.३. १. वाग्भूषणम् २. भवति   ३. मरुद्वहति ४. देवदेवस्य
५. दिगम्बरः   ६. भयात् + रणात् + उपरतम् ७. जगत् + गुरुः
८. तस्मात् + युध्यस्व ९. डयते   १०. वेदान्तकृत् + एव

३.४. १. पुत्रः २. षड्   ३. कामधुग् ४. कर्म   ५. विपद्
६. पुरुषः ७. सम्पद् ८. तुराषाड् ९. केलिः १०. त्रिष्टुभ्

३.५. १. अनारम्भान्नैष्कर्म्यम् / अनारम्भात्नैष्कर्म्यम्
२. वाङ्नियमः / वाग्नियमः   ३. मृन्मयम्
४. तस्मात्मनुष्येषु / तस्मान्मनुष्येषु ५. षण्मुखः / षड्मुखः
६. कश्चिन्माम् / कश्चिद्माम्
७. विश्वराण्णमति / विश्वराड्नमति
८. प्रसादान्मया / प्रसादात्मया ९. त्वङ्मोचनम् / त्वग्मोचनम्
१०. अनादित्वान्निर्गुणत्वात् / अनादित्वान्निर्गुणत्वात्

३.६. १. महतीं चमूम् २. अस्माकं तु   ३. अपर्याप्तं तद्
४. यशांसि   ५. स्रंसते   ६. रंस्यते

३.७. १. पुण्यकृताँल्लोकान्   २. शुभान् ३. लोके
४. समन्तात् + लोकान्   ५. कारः ६. प्रेङ्खा
७. सङ्गणकम् / संगणकम् ८. सम्बन्धः
९. गृहङ्गत्वा / गृहंगत्वा   १०. लिखति

३.८. १. अत्र   २. विषीदन् + इदम्   ३. सर्वस्मिन्
४. उदङ्ङिह ५. अनिच्छन्   ६. औषधे
७. धारयन् + अचलम्   ८. आयातः ९. सन्नव्ययात्मा
१०. निमिषन्

३.९. १. वाग्घीनः / वाग्हीनः   २. जगद्धितम् / जगद्हितम्
३. अब्भ्रासः / अब्ह्रासः   ४. गच्छद्धास्यम् / गच्छद्हास्यम्
५. विड्ढसति / विड्हसति ६. साम्राड्ढरिद्रम् / साम्राड्हरिद्रम्
७. भवद्धितरक्षकः / भवद्हितरक्षकः
८. सुहृद्धृष्टः / सुहृद् हृष्टः /

३.१०. (स्वयं ज्ञातुं शक्यम्)

३.११. १. ताँश्च / तांश्च   २. अगतासूँश्च / अगतासूंश्च
३. सर्वाष्टुँक्कुरान् / सर्वाष्टक्कुरान् ४. एताँस्त्रीन् / एतांस्त्रीन्
५. ताँष्टङ्कारान् / तांष्टङ्कारान् ६. विपरीताँश्च / विपरीतांश्च
७. सखीँस्तथा / सखींस्तथा ८. हताँस्त्वम् / हतांस्त्वम्

३.१२. १. सर्वभृच्च – श्चुत्वसन्धिः २. सत् – श्चुत्वः
३. द्रव्यमयात् + यज्ञात् – जश्त्वसन्धिः ४. जश्त्वः
५. अकर्मणि – जश्त्वः   ६. एतन्मे / एतद्मे –
अनुनासिकसन्धिः   ७. निश्चितम् – अनुनासिकसन्धिः

३.१३. श्चुत्वसन्धिः – आश्चर्यवत् + च, योगात् + चलितमानसः
महानुभावान् + श्रेयः
जश्त्वसन्धिः – केचित् + विलग्ना, जगत् + अव्यक्तमूर्तिना,
यत् + अक्षरम्, कश्चित् + दुर्गतिम्
अनुनासिकसन्धिः – षड् + मयूखाः, तत् + निबध्नाति
लोकात् + न, सुहृत् + नयति
ङमुडागमसन्धिः – कुर्वन् + अपि, कुर्वन् + आप्नोति,
कस्मिन् + औषधे, विद्यार्थिन् + अधीहि

३.१४. १. य+त्+ज्+उहोषि, य + च् + ज् +उहोषि (श्चुत्वसन्धिः)
य + ज् + ज् + उहोषि (जश्त्वसन्धिः)
२. स्या + त् + ज् + अनार्दन
स्या + च् + ज् + अनार्दन (श्चुत्वसन्धिः)
स्या + ज् + ज् + अनार्दन (जश्त्वसन्धिः)
३. यज्ञा + त् + ज् + ञानयज्ञः
यज्ञा + च् + ज् + ञानयज्ञः (श्चुत्वसन्धिः)
यज्ञा + ज् + ज् + ञानयज्ञः (जश्त्वसन्धिः)
४. य + त् + श् + रद्धः
य + त् + छ् / श् + रद्धः (श्चुत्वसन्धिः, छत्वसन्धिः)
यच्छ्रद्धः / यच्श्रद्धः (छत्वसन्धिः)
५. तस्मा + त् + श् + आस्त्रम्
तस्मा + च् + छ्/श् + आस्त्रम् (श्चुत्वसन्धिः,
छत्वसन्धिः)

तस्माच्छास्त्रम्/तस्माच्शास्त्रम् (छत्वसन्धिः)

६. मृ + त् + श् + अकटिकम्

मृ + च् + छ्/श् + अकटिकम् (श्चुत्वसन्धिः,छत्वसन्धिः)

मृच्छकटिक् / मृच्शकटिकम् (छत्वसन्धिः)

७. स + त् + श् + अब्दः

स + च् + छ् / श् + अब्दः (श्चुत्वसन्धिः, छत्वसन्धिः)

सच्छब्दः / सच्शब्दः (छत्वसन्धिः)

३.१५.१. स्यात् + आत्मतृप्तः (जश्त्वसन्धिः)

योगात् + चलितमानसः (श्चुत्वसन्धिः)

सम्यक् + उभयोः (जश्त्वसन्धिः)

जगत् + आहुः (जश्त्वसन्धिः)

तत् + धाम (जश्त्वसन्धिः) – योगाच्चलितमानसः

२. तत् + निबध्नाति (अनुनासिकसन्धिः)

स्यात् + निश्चितम् (अनुनासिकसन्धिः)

एतत् + मे (अनुनासिकसन्धिः)

कृत्स्नवित् + न (अनुनासिकसन्धिः)

पश्यन् + आत्मनि (ङमुडागमसन्धिः) – पश्यन्नात्मनि

३. धर्म्याद् + हि (पूर्वसवर्णसन्धिः)

प्रहसन् + इव (ङमुडागमसन्धिः)

कुर्वन् + अपि (ङमुडागमसन्धिः)

धारयन् + अचलम् (ङमुडागमसन्धिः)

युञ्जन् + एवम् (ङमुडागमसन्धिः) – धर्म्याद्धि

४. आ ब्रह्मभुवनात् + लोकाः (परसवर्णसन्धिः)

समन्तात् + लोकान् (परसवर्णसन्धिः)

प्राप्यपुण्यकतान् + लोकान् (परसवर्णसन्धिः)

श्रुतिमत् + लोके (परसवर्णसन्धिः)

सर्ववित् + भजति (जश्त्वसन्धिः) – सर्वविद्भजति

५. उदासीनवत् + आसीनम् (जश्त्वसन्धिः)

यत् + श्रेयः (छत्वसन्धिः)

तत् + शक्यम् (छत्वसन्धिः)

सत् + शब्दः (छत्वसन्धिः)

त्यागात् + शान्तिः (छत्वसन्धिः) – उदासीनवदासीनम्

६. सखीन् + तथा (सत्वसन्धिः)

इमान् + त्वम् (सत्वसन्धिः)

प्रज्ञावादान् + च (सत्वसन्धिः)

विकारान् + च (सत्वसन्धिः)

तस्माद् + न (अनुनासिकसन्धिः) तस्मान्न

## ४. अयिनस्टायिन उवाच

४.१. १. ज्ञानिनस्तत्त्वदर्शिनः २. हनुमतश्छत्रम्
३. शिरस्स्थिरम् / शिरःस्थिरम् ४. ब्रह्मणस्त्रिविधः
५. भीष्मश्शेते / भीष्मःशेते ६. कर्मयोगश्च ७. कृष्णष्ठक्कुरः

४.२. १. सेनयोः + उभयोः + अपि २. अग्निः + ज्योतिः + अहः
३. त्रिभिः + गुणमयैः + भावैः + एभिः
४. स्थितधीः + मुनिः + उच्यते ५.कर्मफलहेतुः + भूः + मा
६. श्वेतैः + हयैः + युक्ते ७. आरुरुक्षोः + मुनेः + योगम्
८. याभिः + विभूतिभिः + लोकान् ९. मुहुः + मुहुः
१०. अन्तः + ज्योतिः

४.३. १. अपहतज्ञाना आसुरम् / अपहतज्ञानायासुरम्
२. क्षेत्रज्ञ इति / क्षेत्रज्ञयिति ३. मद्भक्त एतत् / मद्भक्तयेतत्
४. मणिगणा इव / मणिगणायिव
५. निर्मानमोहा जितसङ्गदोषा आध्यात्मनित्या विनिवृत्तकामाः
६. लता एधन्ते / लतायेधन्ते
७. षण्मासा उत्तरायणम् / षण्मासायुत्तरायणम्
८. मच्चित्ता मद्गतप्राणा बोधयन्तः
९. नित्ययुक्त एकभक्तिः / नित्ययुक्तयेकभक्तिः
१०. सर्वारम्भा हि ११. शूरा महेश्वासा भीमार्जुनसमाः

४.४. १. एष रजोगुणसमुद्भवः २. स विशिष्यते ३. स उत्तिष्ठति / सयुत्तिष्ठति ४. स वेदवित् ५. एष उदयः / एषयुदयः
६. स पश्यति ७. मुहुर्मुहू रोदिति ८. अन्ताराज्यीयम्

४.५. १. प्रकृतिस्थो हि २. समिद्धोऽग्निः ३. इतरः + जनः
४. अनुपश्यामि ५. द्रवन्ति / दिशो ६. सः अविकम्पेन
७. मुनेः / पश्यतो ८. सर्वतः + अक्षिशिरोमुखम्
९. ध्यायतः + विषयान् १०. कूटस्थोऽक्षरः

४.६. श्रेयः, हि, ज्ञानम्, अभ्यासात्, ज्ञानात्, ध्यानं, विशिष्यते, ध्यानात्, कर्मफलत्यागः, त्यागात्, शान्तिः, अनन्तरम्।
ज्ञानात् ध्यानम्, ध्यानात् कर्मफलत्यागः, त्यागात् शान्तिः

४.७. १. निर्द्वन्द्वः + नित्यसत्त्वस्थः + निर्योगक्षेमः + आत्मवान्
२. दीपः + निवासस्थः + न ३. यतः + यतः + निश्चरति
४. यः यः याम् ५. यदृच्छालाभसन्तुष्टः + द्वन्द्वातीतः + विमत्सरः ६. असितः + देवलः + व्यासः
७.उक्तः + हृषीकेशः + गुडाकेशेन

४.८. १. सामवेद+ :+अस्मि सामवेद +उ +अस्मि (विसर्गसन्धिः उकारः) सामवेदो + अस्मि (गुणसन्धिः) सामवेदोऽस्मि (पूर्वरूपसन्धिः)

२. क्रोध +ः+अभिजायते क्रोध+उ+अभिजायते
(विसर्गसन्धिः उकारः) क्रोधो + अभिजायते
(गुणसन्धिः) क्रोधोऽभिजायते

३. शक्य + ः + अवाप्तुम् शक्य + उ + अवाप्तुम्
(विसर्गसन्धिः उकारः) शक्यो+अवाप्तुम् (गुणसन्धिः)
शक्योऽवाप्तुम् (पूर्वरूपः)

४. स्वभाव + ः + अध्यात्मम् स्वभाव + उ+अध्यात्मम्
(विसर्गसन्धिः–उकारः)
स्वभावो + अध्यात्मम् (गुणसन्धिः)
स्वभावोऽध्यात्मम् ( पूर्वरूपः)

५. स्थित + ः + अस्मि, स्थित + उ + अस्मि
(विसर्गसन्धिः उकारः)
स्थितो + अस्मि ( गुणसन्धिः)
स्थितोऽस्मि (पूर्वरूपसन्धिः)

४.९. १. धृतराष्ट्रः + उवाच  २. कर्मफलहेतुर्भूर्मा
३. निराशीः + निर्ममः + भूत्वा
४. समिद्धः + अग्निः + भस्मसात्
५. सुखोऽन्तरारामस्तथा
६. तपस्विभ्यः + अधिकः + योगी
७. कामैः + तैः + तैः + हृतज्ञानाः
८. अग्निर्ज्योतिरहः  ९. अनन्याः + चिन्तयन्तः + माम्
१०. याभिर्विभूतिभिर्लोकान्
११. वायुः + यमः + अग्निः + वरुणः
१२. श्रद्धाना मत्परमा भक्ताः  १३. स भूयोऽभिजायते
१४. अप्रकाशः + अप्रवृत्तिः + च  १५. वैश्वानरोभूत्वा
१६. कामः + क्रोधः + तथा  १७. पुरुषः + यः + यत्
१८. नीतिः + मतिः + मम

## ५. महाविद्यालये भगवद्गीता

५.१. १. सुधीरः गृहात् दूरस्थे नगरे छात्रावासे वसति।
२. गीता अतीव प्राचीनः ग्रन्थः। तस्य पठनेन अद्य को लोभः? इति विचिन्त्य सुहृदः भगवद्गीताकक्ष्याम् आगन्तुं न इच्छन्ति।
३. उपनिषदः भगवद्गीता ब्रह्मसूत्रं च।
४. भगवान् श्रीकृष्णः गीताद्वारा जीवनं केन प्रकारेण करणीयम्, केन हेतुना कर्म आचरणीयम् इति च उपदिशति।
५. जगति यां काञ्चित् वृत्तिम् अवलम्बमानाः अपि भगवद्गीतातः प्रेरणां प्राप्तुम् अर्हन्ति इति स्वामी विवेकानन्दः वदति।

५.२. ........

५.३. १. प् + इ + त् + ऋ + न् + आ + म्  (न = ण)
प् + इ + त् + ऋ + ण् + आ + म्
२. उ + त् + त् + ई + र् + न् + अ  ('र' कारः)
उ + त् + त् + ई + र् + ण् + अ  (न् = ण्)
३. म् + उ + ष् + न् + आ + त् + इ  (षकारः)
म् + उ + ष् + ण् + आ + त् + इ  (न् = ण्)
४. च् + अ + त् + अ + स् + ऋ + न् + आ + म् (ऋ कारः)
च् + अ + त् + अ + स् + ऋ + ण् + आ + म् (न् = ण्)
५. व् + इ + ष् + न् + उ + ः  (षकारः)
व् + इ + ष् + ण् + उ + ः  (न् = ण्)

५.४. १. षकारः – कोऽपि वर्णः नास्ति  २. रकारः – ऊ, पु, ए
३. रकारः – म्, अ  ४. रकारः – आ
५. ऋकारः – कोऽपि वर्णः नास्ति  ६. रकारः – अ
७. ऋकारः – ह्  ८. रकारः –आ
९. रकारः – कोऽपि वर्णः नास्ति  १०. रकारः – इ, यु, आ

५.५. १. रकारः – श्  २. रकारः – त्  ३. रकारः – च्
४. रकारः – च्  ५. षकारः – ण्  ६. रकारः – द्
७. रकारः – श्  ८. ऋकारः – ल्  ९. रकारः – श्
१०. रकारः – थ्

५.६. १. विषयान्  ३. सर्वाणि, मित्राणि
५. शिक्षणम्  ७. संस्कृतसम्भाषणम्

## ६. मम माता देवता

६.१. १. धावयति  २. रक्षयति  ३. क्रीडयति  ४. शिक्षयति
५. गमयति  ६. दाहयति  ७. भ्रामयति  ८. नाशयति
९. नादयति  १०. ज्वालयति  ११. धारयति  १२. कारयति
१३. जागरयति  १४. क्लेदयति  १५. लेपयति  १६. सोषयति
१७. शोषयति  १८. मोहयति  १९. शोचयति  २०. वर्तयति
२१. दर्शयति  २२. कर्षयति  २३. स्थापयति
२४. ज्ञापयति  २५. दापयति

६.२. १. वानरः फलं पातयति।  २. तातः क्रीडनकं दापयति।
३. कर्मकरः प्रकोष्ठं मार्जयति।  ४. आपणिकः स्यूतं दर्शयति।
५. अग्रजा श्लोकं गापयति।
६. गृहस्थः अतिथीन् उपवेशयति। ७. शिक्षिका स्तोत्रं श्रावयति।

८. मातुलः भोजनं कारयति। ९. सारथिः रथं चालयति।
१०. विदूषकः दर्शकान् हासयति।

६.४. मोहयति – मोहयिष्यति, मोहयतु, मोहयेत्
प्रवर्तयति – प्रवर्तयिष्यति, प्रवर्तयतु, प्रवर्तयेत्
निर्वर्तयामि – निर्वर्तयिष्यामि, निर्वर्तयानि, निर्वर्तयेयम्
बोधयन्ति – बोधयिष्यन्ति, बोधयन्तु, बोधयेयुः
सन्तापयन्ति – सन्तापयिष्यन्ति, सन्तापयन्तु, सन्तापयेयुः
ज्ञापयति – ज्ञापयिष्यति, ज्ञापयतु, ज्ञापयेत्
नाशयन्ति – नाशयिष्यन्ति, नाशयन्तु, नाशयेयुः
दर्शयन्ति – दर्शयिष्यन्ति, दर्शयन्तु, दर्शयेयुः

६.५. १. शिक्षकः मां श्लोकं पाठितवान् ।
२. माता पुत्रीं भजनं पाठितवती। ३. भवान् बालं मन्त्रं पाठयतु।
४. सः माम् आङ्ग्लम् अपाठयत्।
५. गुरुः छात्रान् सम्यक् पाठयेत् ।
६. अहं पाठं पाठयित्वा गृहम् आगच्छामि ।
७. शिक्षकाः छात्रान् प्रपाठ्य परीक्षां कुर्वन्ति।
८. भवान् संस्कृतं पाठयितुम् इच्छति किम् ?
९. सः पाठयन् मध्ये मध्ये हासयति।
१०. शिक्षिका पाठयन्ती आत्मानं विस्मृतवती।

६.६. १. शिक्षकः छात्रैः अभ्यासान् लेखयति।
२. मेघानां गर्जनम् अस्मान् भाययति।
३. तरणपटवः बालान् नदीम् अतारयन्।
४. ताः महिलाः अतिथीन् गृहं प्रवेशितवत्यः।
५. अहं सर्वेषां भोजनं कारयित्वा खादामि।
६. विदूषकाः सर्वान् जनान् हासितवन्तः।

६.७. १. पातयति २. दापयति ३. कारयति ४. आनाययति
५. वाहयति ६. अलेखयत् ७. तारयितुम् ८. स्थापयति
९. प्रापयति १०. कारयति

६.८. १. क्लेदयन्ति २. शोषयति ३. नियोजयसि
४. मोहयसि ५. अनुवर्तयति ६. जनयेत् ७. जोषयेत्
८. विचालयेत् ९. प्रकाशयति १०. अवसादयेत्

६.९. पाययति / लालयति / नीराजयति / स्वापयति
भोजयति /तोषयति / पाठयति / गायति

## ७. गुरोः स्थानम्

७.१. १. सौपर्णिकानदितीरे गुरुकुलम् आसीत्।
२. गुरुः छात्रान् शास्त्राणि पाठयति स्म।
३. गुरुः अचिरादेव मरिष्यति इति छात्राः अवागच्छन्।
४. गुरुः उत्थाय नद्यभिमुखम् अचलत्।
५. शिष्यः कमण्डलुं जलेन पूरयित्वा प्रत्यर्पितवान्।
६. छात्राः जलं पवित्रं तीर्थमिति मत्वा अपिबन्।
७. गुरोः वचनेन शिष्याः प्रमुदिताः अभवन्।

७.२. १. पुरातनम् २. अचिरात् ३. रिक्तः
४. वितीर्य ५. प्रहसन् ६. प्रमुदिताः

७.३. १. छात्राः सञ्चरन्ति। २. छात्रः गच्छति।
३. छात्रः अपिबत्। ४. छात्रः आनयत्। ५. छात्रः पिबति।

७.४. १. बालकम् २. वत्सम् ३. मित्रम् ४. कर्मकरम्

७.५. १. रविम् २. चालकम् ३. छात्रम् ४. पुत्रीम्

७.६. १. अतिथिम् २. पुत्रम् ३. भिक्षुकम् ४. मार्जारम्

७.७. १. प्रतिनिधिम् २. अन्तेवासिनम् ३. राजेन्द्रम्

७.८. १. शिशुम् २. अनुजम् ३. नारिकेलम्
४. सज्जनम् ५. समस्याम् ६. सर्वान् ७. सर्पम्
८. शाखाम् ९. भक्तम् १०. मणिम् ११. मनुष्यम्

७.९. १. शिवः – शङ्करः २. गुरुः – शिष्यः
३. स्वामी – कर्मकरः ४. सः – अहम्
५. माता – पुत्रः ६. माता – पुत्री
७. सखी – रमा ८. रामः – सेवकः
९. अध्यापकः – छात्रः १०. वसन्तः – चैत्रः

७.१०. १. रुग्णम् २. छात्रान् ३. कर्मकरैः
४. रजकेन ५. भवन्तम् ६. छात्रम्
७. पाचिकया ८. वृक्षान् ९. शिशुम् १०. रमया

७.११. १. रजन्या विमलायै लेखनीं दापयति।
२. मां विद्यालयं प्रापयति। ३. मित्रं गृहं गमयति।
४. लेखनेन कथाः लेखयति। ५. गृहं शोभयति।
६. विवेकेन प्रश्नं कारयति। ७. विक्रमं जलं पाययति।
८. चन्द्रं प्रकाशयति। ९. नलिनीं फलम् आशयति।
१०. सीतां गीतं श्रावयति।

७.१२. गत्यर्थकाः – गमि, प्रापि, सञ्चारि, आटि, आयि
ज्ञानार्थकाः – वेदि, ज्ञापि, अवगमि, बोधि
भक्षणार्थकाः – आशि, पायि, भक्षि, भोजि, ग्रासि
शब्दकर्मकाः – अध्यापि,भणि, श्रावि, गदि, पाठि
अकर्मकाः – वर्धि, जनि, वर्ति, भावि, हासि

७.१३. १. अर्जुनः – बोधि – बुद्ध्यर्थकः
२. मन्त्री – श्रावि – शब्दकर्मकः

३. जनाः – हासि – अकर्मकः
४. अनुजः – आयि – गत्यर्थकः
५. शिष्यः – वेदि – बुद्ध्यर्थकः
६. किशोरः – गापि – शब्दकर्मकः
७. छात्रा – नर्ति – अकर्मकः
८. रोगी – गारि – प्रत्यवसानार्थकः
९. पत्राणि – प्रापि – गत्यर्थकः
१०. पुत्रः – आशि – प्रत्यवसानार्थकः

## ८. जातस्य हि ध्रुवो मृत्युः

८.१. १. कृत २. स्मृत ३. मृत ४. श्रुत
५. जीवित ६. कम्पित ७. रक्षित ८. मत
९. हत १० . तत ११. शान्त १२. क्रान्त
१३. सुप्त १४. सिद्ध १५. वृद्ध १६. स्निग्ध
१७. विष्ट १९. दृष्ट

८.३. १. दृष्टम् २. प्राप्तम् ३. समापितः ४. दत्तम्
५. कारितः ६. प्रसारिता ७. पुटीकृतानि
८. सज्जीकृता ९. मार्जितः १०. कृतानि

८.५. १. वृक्षः कम्पितः। २. पक्वफलं पतितम्।
३. बालिका हसिता। ४. बालकः हसितः।
५. शिशुः रुदितः। ६. वृक्षः वृद्धः।
७. माता कुपिता। ८. मातमही देवालये स्थिता।
९. बालः धावितः। १०. चोरः भीतः।

८.६. १. रामः वनं गतः। २. सीता रामम् अनुगता।
३. लक्ष्मणः रामम् अनुसृतः। ४. सः ग्रामं व्रजितः।
५. भक्ताः भवसागरं तीर्णाः। ६. अतिथयः गृहम् आगताः।
७. छात्रः ग्रन्थालयं यातः। ८. कपयः सागरं तीर्णाः।
९. गोविन्दः कष्टम् अतीतः। १०. बालिका सङ्गीतपरीक्षाम् उत्तीर्णा।

८.७. १. X – X – X – X २. ✓ – ✓ – X – X
३. ✓ – ✓ – X – X ४. X – ✓ – X – X
५. ✓ – X – X – ✓ ६. ✓ – X – ✓ – X
७. ✓ – X – ✓ – X

८.८. .........

८.९. १. १५.२ – अनुसन्ततानि – कर्तरि
२. १५.२० – उक्तम् – कर्मणि
३. १५.१८ – अतीतः – कर्तरि
४. १५.१८ – प्रथितः – कर्तरि
५. ३.२० – आस्थिताः – कर्तरि
६. ४.३ – प्रोक्तः – कर्मणि
७. ४.५ – व्यतीतानि – कर्तरि
८. ४.१३ – सृष्टम् – कर्मणि
९. ५.१९ – अजितः – कर्मणि
१०. ५.१९ – स्थितम् – कर्तरि
११. १४.१ – गतः – कर्तरि
१२. १८.६३ – आख्यातम् – कर्मणि
१३. १८.७३ – नष्टः – कर्तरि
१४. १८.७३ – लब्धा – कर्मणि
१५. १८.७३ – स्थितः – कर्तरि

## ९. ब्रह्मार्पणम्

९.१. १. व्यासः यमुनानद्याः अन्यत् तीरं गन्तुम् इष्टवान्।
२. यमुनानद्याः तीरे सः नौकायाः प्रतीक्षां कुर्वन् आसीत्।
३. गोप्यः दुग्धं नवनीतं च गृहीत्वा तत्र आगताः।
४. सूर्ये अस्तं गते अपि नौका नागता।
५. गोप्यः व्यासाय दुग्धं नवनीतं च दत्तवत्यः। ६. आम्।
७. व्यासः कृतवान्। ८. आम्।
९. यमुनानदी द्विधा विभक्ता।
१०. व्यासः सर्वाणि कार्याणि ब्रह्मार्पणबुद्ध्या करोति।

९.२. ..........

९.३. १. पुष्पाणां विकसनम् – पुष्पाणि
२. भोजनस्य समापनम् – भोजनम्
३. द्रव्यस्य नाशनम् – द्रव्यम्
४. पितुः गमनम् – पिता
५. अग्रजायाः आगमनम् – अग्रजा

९.४. १. प्रातःकाले जाते सति माता उत्थितवती।
२. भोजने समाप्ते सति पिता कार्यालयं गतवान्।
३. स्नेहितेषु गतेषु सत्सु अहं भोजनं कृतवान्।
४. सख्योः आगतयोः सत्योः अनुजा क्रीडितुं गतवती।
५. परीक्षायाम् आगतायां सत्यां छात्राः पठने निरताः अभवन्।
६. मातरि अस्वस्थायां जातायां सत्यां पिता पाकम् अकरोत्।
७. अवसरे प्राप्ते सति सखी मह्यं दूरभाषां कृतवती।
८. द्रव्ये नष्टे सति धनिकः दुःखी अभवत्।
९. वृक्षे पतिते सति वाहानानि स्थगितानि।
१०. श्रीरामे वनं गते सति दशरथः प्राणान् त्यक्तवान्।

९.५. १. प्रापणम् – अन्नम् २. श्रवणम् – गीतम् ३. श्रावणम् – कथा ४. पठनम् – पुस्तकम् ५. खादनम् – फलानि

९.६. १. भीष्मस्य शङ्खनादे श्रुते सति अर्जुनः चिन्ताकुलः जातः।
२. अवसरे प्राप्ते सति सा दूरभाषां कृतवती।
३. सखीभिः पद्ये गीते सति सा नृत्तवती।
४. जनैः चोरेषु गृहीतेषु सत्सु आरक्षकाः आगताः।
५. मात्रा पितृवचने स्मारिते सति अग्रजः आपणं गतवान्।

९.७. १. नृपे सूचितवति सैनिकाः धावितवन्तः।
२. गुरौ आहूतवति शिष्याः आगतवन्तः।
३. नेतरि आगतवति जनाः करताडनं कृतवन्तः।
४. वृक्षे पतितवति वाहनानि स्थगितानि।
५. मातरि आगतवत्यां वयं भोजनं कृतवन्तः।
६. बालकयोः क्रीडितवतोः माता वार्तापत्रिकां पठितवती।
७. शिक्षिकायां पाठितवत्यां छात्रः विषयम् अवगतवान्।
८. धनिके विज्ञापिकां दृष्टवति सुहृत् आगतवान्।
९. गायिकायां पद्यं गीतवत्यां बालकौ वाद्यं वादितवन्तौ।
१०. मित्रेषु आगतवत्सु वयं चलनचित्रं दृष्टवन्तः।

९.८. १. शिक्षके वदति छात्राः श्रुतवन्तः।
२. दिलीपे स्नानं कुर्वति जलागमनं स्थगितम्।
३. पौत्रादिषु क्रीडत्सु मातामही सन्तुष्टा अभवत्।
४. चन्द्रे उदयमाने कुमुदं विकसति।
५. अग्रजायां पठन्त्याम् अहं क्रीडामि।
६. युष्मासु चलनचित्रं पश्यत्सु अहं निद्रां करोमि।
७. वृक्षे कम्पमाने पर्णानि पतन्ति।
८. मयि गृहे वर्तमाने बालाः तूष्णीं भवन्ति।
९. पुरुषे कष्टं सहमाने कार्यपूर्तेः आनन्दं प्राप्नोमि।
१०. अग्रजे देवं वन्दमाने अनुजः अनुकरोति।

९.९. सम्प्राप्ते सन्निहिते काले / वयसि गते
शुष्के नीरे / क्षीणे वित्ते / ज्ञाते तत्त्वे
जीवति जर्जरदेहे / गतवति वायौ

९.१०. १. प्रवृत्ते शस्त्रसम्पाते २. धर्मे नष्टे
३. स्त्रीषु दुष्टासु ४. हन्यमाने शरीरे
५. सर्वेषु भूतेषु नश्यत्सु ६. क्षीणे पुण्ये ७. विवृद्धे
८. विवृद्धे ९. सत्त्वे प्रवृद्धे

## १०. ततो दुःखतरं नु किम् ?

१०.१. १. सुन्दरतमा २. गुणवत्तमः ३. कर्कशतरः
४. समीपतमः ५. क्रूरतमः ६. दूरतरम्
७. मधुरतमः ८. दीर्घतरः ९. विरलतमः
१०. विरलतमः, विरलतमः

१०.२. १. बुद्धिमत्तरा २. बुद्धमत्तमा ३. गुणवत्तमा
४. शक्तिमत्तमः ५. बलवत्तरा ६. बलवत्तरम्

१०.३.१. अङ्गुष्ठः, तर्जनी, मध्यमा, अनामिका, कनिष्ठिका।
२. मध्यमा ३. मध्यमा ४. अनामिका ५. कनिष्ठिका
६.अङ्गुष्ठः ७.अनामिका ८. कनिष्ठिका अङ्गुलीनां राज्ञी इति।
९. आम्, उचितः। १०. सत्सङ्गः महत्तमः इति।

१०.४.क. १. रामः २. शत्रुघ्नः ३. लक्ष्मणः ४. भरतशत्रुघ्नौ
ख. १. सीता २.श्रुतकीर्तिः ३. उर्मिला
४. उर्मिला-माण्डवीश्रुतकीर्तयः
ग. १.महाभारतकाव्यम् २. रामायणमहाभारतकाव्ये

१०.६. १. श्रेष्ठः २. दुःखतरम् ३. श्रेयः
४. दुर्लभतरम् ५. परतरम् ६. गरीयान्

१०.७. १. ज्यायसी २. ज्यायः ३. श्रेयान् ४. प्रियतरः
५. पापकृत्तमः ६. श्रेयः ७. युक्ततमः ८. गुह्यतमम्
९. योगवित्तमाः १०. अधिकतरः ११. गुह्यतमम्
१२. प्रियकृत्तमः

१०.८. तरप् – विशालतरम्
तमप् – प्रसिद्धतमा, सुन्दरतमम्, प्रसिद्धतमया
इष्ठन् – श्रेष्ठः, भूयिष्ठम्, श्रेष्ठे

## ११. कोऽयं रामेश्वरः ?

५. महारथः ६. हृषीकेशः ७. भीमकर्मा
८. वृकोदरः ९. श्रद्धाविरहितम्

११.१.१. रामः भूलोके समुद्रतटे आसीत्।
२. नारदः कलहप्रियः आसीत्।
३. रामः शिवलिङ्गस्य पूजां करोति।
४. शिवः कैलासे वसति।
५. नारदः कैलासे पार्वतीपरमेश्वरौ अपश्यत्।
६. सम्भ्रान्तचित्तः नारदः सत्यलोकं गतः।
७. भस्मविभूसितः शङ्करः।
८. शिवपक्षे रामेश्वरशब्दस्य अर्थः 'रामः ईश्वरः यस्य सः'
९. नारदः ब्रह्मदेवं पृष्टवान् 'रामेश्वर' शब्दस्य कोऽर्थः इति।
१०. रामेश्वरौ अभिन्नौ स्तः।

११.२. १. धर्मक्षेत्रे २. कुरुक्षेत्रे ३. पाण्डवानीकम्

४. पाण्डुपुत्राणाम् ५. द्रुपदपुत्रेण

११.३. विश्वेश्वरः, पार्थसारथिः, विशुद्धात्मा, अपराजिताः, निस्पृहः, धर्मसंस्थापनम्, कृतकृत्यः, स्वजनाः, स्वधर्मः, संसारसागरः, देहान्तरप्राप्तिः, अन्यदेवताः, पद्मपत्रम्, निरहङ्कारः, महात्मा, अनिकेतनः, विगतस्पृहः, विश्वरूपम्, योगक्षेमम्, गणपतिः, केशवार्जुनौ

## १२. आदिमः ऋषिः

१२.१.१. मानवः गुहायां निवसति स्म।
२. गुहानिर्गतः मानवः किञ्चन उन्नतं गिरिशिखरं गच्छति।
३. मानवः मेघगर्जनं श्रुत्वा 'ॐ'कारस्य अनुकरणं करोति।
४. नेत्रोन्मीलने सति एकः सूर्यकिरणः गोचरीभवति।
५. ॐकारः कण्ठे, हृदये नासिकायां च सञ्चरति।
६. इन्द्रियसंवेद्या शक्तिः भगवान् इति कथ्यते।

१२.२. १. उदरपोषणम् २. व्याकुलतापन्नः ३. नेत्रोन्मीलने ४. ॐकारस्य

१२.३.१. बुद्धियुक्ताः २. जन्मबन्धविनिर्मुक्ताः ३. श्रुतिविप्रतिपन्ना ४. कामक्रोधावियुक्तानाम् ५. मदर्थम् ६. क्षेत्रक्षेत्रज्ञसंयोगात्

१२.४.१. दशरथस्य पुत्रः २. बुद्ध्या युक्तः ३. भक्त्या उपहृतम् ४. योगात् भ्रष्टः ५. आचार्याणाम् उपासनम् ६. युद्धे विशारदाः ७. मम भक्तः ८. मन्त्रैः हीनम् ९. आत्मनि रतिः १०. बुद्धेः भेदम्

१२.५.१. योगारूढः (द्वितीयातत्पुरुषः) २. सर्वगतः (द्वि.त.)
३. (द्वि.त.)४. विधिदृष्टः (तृ.त.)५. बुद्धियुक्तः (तृ.त.)
६. भक्त्युपहृतम् (तृ.त.) ७. मन्त्रहीनम् (तृ.त.)
८. श्रद्धाविरहितम् (तृ.त.) ९. गुणान्वितम् (तृ.त.)
१०. दम्भार्थम् (च.त.) ११. मदर्थम् (च.त.)
१२. अवहासार्थम् (च.त.) १३. योगभ्रष्टः (प.त.)
१४. अमृतोद्भवः (प.त.) १५. कर्मसमुद्भवः (प.त.)
१६. आचार्योपासनम् (ष.त.) १७. मद्भक्तः (प.त.)
१८. नरलोकवीराः (प.त.) १९. आत्मरतिः (स.त.)
२०. युद्धविशारदः (प.त.)

१२.६. सर्वद्वाराणि / घनश्यामः / पुरुषव्याघ्रः
शीलधनम् / देवब्राह्मणः / विन्ध्यपर्वतः

१२.७. अनन्यः / अनिन्द्यः / अनिष्टम्
अहितम् / अनीतिः / अक्रोधः

१२.८.१. न च्छेद्यः, न दाह्यः, न क्लेद्यः, न शोष्यः
२. न अहङ्कारः ३. न इच्छन् ४. न नित्यम् ५. न कीर्तिः
६. न हिताः ७. न कर्मकृत् ८. न सक्तः
९. न विद्वांसः १०. न विनाशि ११. न विभक्तम्
१२. न द्वेष्टा

## १३. अहङ्कारविमूढात्मा

१३.१.१. उदयपुरीं विशालाक्षः परिपालयति स्म।
२. संन्यासी देवं ध्यायति स्म।
३. त्रुटितध्यानः संन्यासी 'यदा 'अहं' म्रियते तदैव प्राप्तसन्तोषः भविष्यसि' इति अवदत्।
४. महाराजः संन्यासिनं मारयितुम् उद्युक्तः।
५. संन्यासी 'अहो मूढ' इति महाराजस्य सम्बोधनम् अकरोत्।
६. राजा विगतगर्वः अभूत्।

१३.२.१. आरूढरथेन २.प्राप्तसन्तोषः
३. अपमानयति ४. विगतगर्वः

१३.३.१. व्यपेतभीः २. ज्ञानचक्षुषः ३. जितात्मा ४. ऊर्ध्वमूलः
५. त्यक्तजीविताः ६.चलितमानसः ७. जितेन्द्रियः
८. छिन्नसंशयः ९. त्यक्तसर्वपरिग्रहः १०. कृतनिश्चयः

१३.४. १. शस्त्रपाणयः २. कपिध्वजः ३. भालनेत्रः ४. कोदण्डपाणिः
५. आयुधपाणयः ६.लगुडहस्तः
७. वीणापाणिः ८. कमलहस्ता

१३.५.१. अविद्यमानः अन्तः यस्य सः।
२. अविद्यमानः आदिः यस्य तम्।
३. अविद्यमानः निकेतः यस्य सः।
४. अविद्यमानं शस्त्रं यस्य तम्।
५. अविद्यमानः आमयः यस्य तत्।
६. अविद्यमाना अपेक्षा यस्य सः।
७. अविद्यमानम् अन्यत् यस्मिन् तत्।

## १४. रहस्यमिदमुच्यते

१४.१.१. कृष्णार्जुनौ अटनार्थं प्रस्थितौ।
२. धर्माधर्मवेत्ता श्रीकृष्णः।
३. श्रीकृष्णः 'अस्मिन् ग्रामे दुर्भिक्षं भवतु। नदीतटाकाः निर्जलाः भवन्तु। वृक्षेषु लतासु च फलपुष्पाणि मा वर्धन्ताम्' इति ग्रामजनान् उद्दिश्य उक्तवान्।
४. विस्मितः अर्जुनः 'भगवन्! भवान् तु कृपासागरः, सर्वेषां योगक्षेमं वहति, एवं सति कथं दुष्टान् अशिषा अनु-गृहीतवान्? सज्जनान् च शप्तवान्' इति अपृच्छत्।
५. जनाः सुखभोगेषु रममाणाः बहिः नैव गच्छन्ति।

१४.२.१. केशवार्जुनौ २. फलपुष्पाणि
३. सृष्टिस्थितिलयस्य ४. सज्जनानाम्

१४.३.१. आम्रन्यग्रोधौ २. व्यासकपिलौ ३. धेनुव्याघ्रम्
४. छन्दस्साहित्ये ५. इन्द्रवायू ६. चणकगोधूमौ
७. जैमिनिकणादविश्वामित्राः ८. पाणिनिपतञ्जली

१४.४.१. रजकतन्तुवायौ २. माता
३. व्यासभासकालिदासाः ४. पटश्च
५. मार्जारमूषकम् ६. शिरः च ७. गीतासीतालताललिताः
८. रमेशः च दिनेशः च गणेशः च गोविन्दः च

१४.५.१. सुघोषः च मणिपुष्पकः च। २. सुखं च दुःखं च।
३. सांख्यं च योगश्च।
४. विहारश्च शय्या च आसनं च भोजनं च, तेषु।
५. स्थावरं च जङ्गमं च अनयोः समाहारः।
६. चरश्च अचरश्च अनयोः समाहारः।
७. शुभं च अशुभं च अनयोः समाहारः।
८. योगः च क्षेमं च अनयोः समाहारः तम्
९. प्रसादः च मोहः च

१४.६.१. निर्विघ्नम् २. कालम् अनतिक्रम्य ३. यथाभागम्
४. उपभित्ति ५. नगरस्य समीपम् ६. प्रतिमासम् ७. राष्ट्रे राष्ट्रे

१४.७.१. गजाननः – बहुव्रीहिः २. कुक्कुटमयूर्यौ – इतरेतरद्वन्द्वः
३. अहिनकुलम् – समाहारद्वन्द्वः ४. नरसिंहः – कर्मधारयः
५. उपनदि – अव्ययीभावः ६. कृष्णार्जुनौ – इतरेतरद्वन्द्वः
७. पार्वतीपरमेश्वरौ – इतरेतरद्वन्द्वः
८. रामायणकाव्यम् – कर्मधारयः

१४.८. बहुव्रीहिः – मृगलोचना, विशालाक्षी, महाबलः, एकोनः, लम्बकर्णः
तत्पुरुषः – अधिकारिभयम्, ग्रामगतः, राजपुरुषः
द्वन्द्वः – तरुलते, ब्रह्मविष्णुमहेश्वराः, आयुरारोग्यैश्वर्याणि, हरिहरौ
अव्ययीभावः – उपनगरम्, यथाविधि, उपोद्यानम्, निर्विघ्नम्
कर्मधारयः – पुरुषसिंहः, कृष्णसर्पः, महर्षिः, मुखकमलम्
द्विगुः – चतुर्युगम्, त्रिभुवनम्, पञ्चवटी, अष्टाध्यायी

## १५. बाणभूषणसंवादः

१५.१. १. कविना लिख्यमानं काव्यं पठितुं जनाः उत्सहन्ते।
२. राधया गीयमानं गीतं रसिकाः शृण्वन्ति।
३. गोविन्देन खाद्यमाने फले बीजानि सन्ति।
४. गणेशेन क्रीयमाणानि वस्त्राणि सुन्दराणि सन्ति।
५. रामेण पठ्यमाने पाठे श्लोकाः सन्ति।
६. आनन्देन लिख्यमानायां कथायां हास्यरसः अस्ति।
७. मया क्रियमाणस्य कार्यस्य विघ्नं मा करोतु।
८. बालिकया पठ्यमानस्य ग्रन्थस्य नाम अहं न जानामि।
९. भवता क्रियमाणात् कार्यात् कस्यापि हानिः नास्ति।
१०. दुष्टैः निन्द्यमानाः सज्जनाः खेदं प्राप्नुवन्ति।
११. पितामहेन कथ्यमाना कथा कुतूहलकरी आसीत्।
१२. शिशुना खाद्यमानं चाकलेहम् एषः बलात् स्वीकृतवान्।
१३. तेन चीयमानानि फलानि भवती गृहं नयतु।
१४. कृषिकेण सह्यमानस्य कष्टस्य निवारणं करोतु।
१५. याचकेन प्रार्थ्यमानस्य धनिकस्य नाम दयारामः।

१५.२. १. पीयमानम् २. लिख्यमाना ३. दृश्यमाने
४. दीयमानान् ५. उच्यमानम् ६. प्रेष्यमाणा
७. प्रदर्श्यमानम् ८. श्रूयमाणा ९. क्रियमाणेन
१०. खाद्यमानानाम् ११. नीयमाने १२. प्राप्यमाणेन
१३. निर्दिश्यमानात् १४. सूच्यमानाय १५. गम्यमाने

## १६. भाषणपरिपाटी

१६.१.१. पोषकौ, पोषकाः २. वक्ता, वक्तारः ३. बाधकम्, बाधके
४. गन्तृणी, गन्तॄणि ५. ज्ञात्री, ज्ञात्र्यौ ६. प्रेषकम्, प्रेषकाणि
७. प्रष्टा, प्रष्टारौ ८. प्रच्छिका, प्रच्छिके ९. भोक्त्र्यौ, भोक्त्र्यः
१०. प्रापकम्, प्रापकाणि ११. कर्तृ, कर्तॄणि
१२. घातकः, घातकौ

१६.२.१. रक्षिका २. गन्तॄणि ३. ज्ञाता ४. पठित्र्यौ
५. नायिका ६. पठितारौ ७. परिशीलकः ८. स्तोत्र्यः

१६.३.१. लेखकः २. पाचकौ ३. पठित्र्यः ४. बाधिकाः
५. अपहारकाणि ६. नेतारः ७. स्मर्तारः ८. वीक्षिके
९. पालकौ १०. अध्येत्र्यौ ११. उद्धर्तारः १२. वक्ता, श्रोता

१६.४.१. जनिता, उपनेता, अन्नदाता, भयत्राता
२. कर्ता, कारयिता, प्रेरकः, अनुमोदकः
३. दारकः, तारकः, पालकः, नायकः
४. कारकः, दायकः, सर्जकः, रक्षकः
५. पाठकः, दायकः, पावकः, वाहकः

१६.५.१. स्तु + ल्युट् – स्तवनम् २. गम् + ल्युट् – गमनम्
३. क्रीड् + ल्युट् – क्रीडनम् ४. तॄ + ल्युट् – तरणम्
५. वच् + ल्युट् – वचनम् ६. चिन्त् + ल्युट् – चिन्तनम्

७. अप +हृ +ल्युट् – अपहरणम्
८. उत् + स्था +ल्युट् – उत्थानम्
९. परि+वेषि + ल्युट् – परिवेषणम्
१०. उद्+धृ + ल्युट् – उद्धरणम्

१६.६. पश्यति – दृश् + ल्युट् = दर्शनम्,
ददाति – दा + ल्युट् = दानम्
आराधयति – आराध् + ल्युट् = आराधनम्
ध्यायति – ध्यै + ल्युट् = ध्यानम्
प्रयाति – प्र + या +ल्युट् = प्रयाणम्
म्रियते – मृ + ल्यट् = मरणम्
संन्यस्याति – सं + नि + अस्+ल्युट् = संन्यसनम्
अर्पयति – अर्पि + ल्युट् = अर्पणम्

१६.७. १. अभिगमनम्, हरणम्, मरणम्, सम्भाषणम्, निग्रहणम्, समुद्रतरणम्, दाहनम्, हननम्।
२. जननम्, वर्धनम्, अपहरणम्, उद्धारणम् हननम्, पालनम्, कथनम्

## १७. ज्ञानं विज्ञानसहितम्

१७.१. १. ते सिषेवन्ते २. भवन्तः किमपि विवक्षन्ति किम् ?
३. त्वं खादुफलं चिखादिषसि खलु ?
४. वयं विश्वं जिगीषामः। ५. यूयम् उत्तरं जिज्ञासध्वे।
६. के युयुत्सन्ते। ७. तापसाः मोक्षं लिप्सन्ति।
८. अर्जुनः ऐश्वरं रूपं दिदृक्षते। ९. अहं जलं पिपासामि।
१०. वयं शतं वर्षाणि जिजीविषामः।

१७.२. १. युयुत्सवः २. दिदृक्षते ३. चिकीर्षून्
४. मुमुक्षुभिः ५. जिगीषूनाम्

१७.३. १. ते संस्कृतकार्यं चिकीर्षन्ति। ते संस्कृतकार्यं चिकीर्षवः सन्ति। तेषां संस्कृतकार्यस्य चिकीर्षा अस्ति।
२. अहं गणितं पिपठिषामि। अहं गणितं पिपठिषुः अस्मि। मम गणितस्य पिपठिषा अस्ति।
३. यूयं विश्वं जिगीषथ। यूयं विश्वं जिगीषवः स्थ। युष्माकं विश्वस्य जिगीषा अस्ति।
४. वयं सत्यं विवक्षामः। वयं सत्यं विवक्षन्तः स्मः। अस्माकं सत्यस्य विवक्षा अस्ति।

१७.४. १. लिप्सया २. दिदृक्षायाम् ३. युयुत्सया ४. जिगीषया
५. पिपठिषाम् ६. बुभुक्षायाः ७. जिजीविषायै

१७.५. जिज्ञासया – जिज्ञासाभ्याम् – जिज्ञासाभिः
पिपठिषवे – पिपठिषुभ्याम् – पिपठिषुभ्यः
चिकीर्षुः – चिकीर्षू – चिकीर्षवः
युयुत्सुम् – युयुत्सू – युयुत्सून्
जिजीविषोः – जिजीविषुभ्याम् – जिजीविषुभ्यः

## १८. कर्मण्येवाधिकारस्ते

१८.२. १. गमनक्रिया विमानम् → तृतीया
२. लेखनक्रिया लेखनी → तृतीया
३. खादनक्रिया शुण्डा → तृतीया
४. विहरणक्रिया नौका → तृतीया
५. खननक्रिया खनित्रम् → तृतीया
६. चलनक्रिया पादौ → तृतीया

१८.३. १. दानक्रिया स्वामी धनम् सेवकः
२. निवेदनक्रिया पिता नैवेद्यम् देवः
३. अर्पणक्रिया अग्रजा पुष्पम् देवः
४. समर्पणक्रिया सैनिकः प्राणाः देशः
५. वितरणक्रिया प्रकाशः पत्रम् देवदत्तः

१८.४. १. चयनक्रिया वृक्षस्य फलस्य च वृक्षः
२. आनयनक्रिया वित्तकोषस्य धनस्य च वित्तकोषः
३. अवतरणक्रिया अधिकारिण्याः वाहनस्य च वाहनम्
४. पतनक्रिया लतानां पुष्पाणां च लताः
५. आगमनक्रिया कार्यालयस्य अग्रजस्य च कार्यालयः
६. अपहरणक्रिया वित्तकोषस्य धनस्य च वित्तकोषः

१८.५. १. तरणक्रिया जलम् हंसस्य
२. शयनक्रिया शय्या शिशोः
३. सत्ताक्रिया पठनम् इच्छा
४. पठनक्रिया विद्यालयः सः
५. क्वथनक्रिया शरावः जलम्
६. करणक्रिया अमेरिका विठलः

१८.६. १. संस्कृतभाषा – वैषयिकः २. फलम् – अभिव्यापकः
३. वृक्षः – औपश्लेषिकः ४. नदी – औपश्लेषिकः
५. गानम् – वैषयिकः ६. आकाशः – औपश्लेषिकः

१८.७. १. गमनक्रिया बालः ग्रामः
२. खादनक्रिया वानरः फलम्
३. भजनक्रिया भक्तः हरिः

४. तोषणक्रिया	चन्द्रः	जनाः
५. पचनक्रिया	माता	मधुरम्

१८.८. १. कर्मकारकम् द्वितीया – बालकः धनेन वस्त्रं क्रीणाति।
२. करणकारकम् – तृतीया – बालकः चषकेण पिबति।
३. कर्मकारकम् – द्वितीया – बालकः चषकम् इच्छति।
४. सम्प्रदानकारकम् – चतुर्थी
– बालकेन चषकाय धनं ददाति।
५. करणम् – तृतीया – बालकेन चषके रसः पीयते।
६. अपादानकारकम् – पञ्चमी – चषकात् जलं स्रवति

१८.९. १. कर्मकारकम् – द्वितीया २. अधिकरणकारकम् – सप्तमी
३. कर्तृकारकम् – प्रथमा ४. अधिकरणकारकम् – सप्तमी
५. कर्तृकारकम् – तृतीया ६. कर्तृकारकम् – तृतीया
७. कर्तृकारकम् – प्रथमा ८. कर्तृकारकम् – तृतीया
९. गीताश्लोकम् – द्वितीया
१०.अधिकरणकारकम् –सप्तमी

१८.१०. कर्तृकारकम्, अधिकरणकारकम्, कर्तृकारकम्, अधिकरणकारकम्

१८.११. १.करणकारकम् – तृतीया २. करणकारकम् – तृतीया
३. करण्कारकम् – तृतीया ४. करणकारकम् – तृतीया
५ .करणकारकम् – तृतीया ६. कर्मकारकम् – द्वितीया
७. सम्प्रदानकारकम् – चतुर्थी ८. सम्प्रदानकारकम् – चतुर्थी
९. कर्मकारकम् – द्वितीया

## १९. युक्ताहारविहारस्य

१९.१. द्रौपदेयः, वासुदेवः, भारतः, पार्थः, सौभद्रः, पाण्डवः

१९.२. १. धार्तराष्ट्रः २. राधेयः ३. दाशरथिः ४. जानकी
५. सौमित्रिः ६. वासुदेवः ७.आञ्जनेयः ८.सौभद्रः
९. कौन्तेयः १०. दैत्यः

१९.३. १. पार्वती – अण् २. सौमदत्तिः – इञ् ३. पौत्रः – अण्
४. वार्ष्णेयः – ढक् ५. इञ् ६. मानवः – अण्
७. भागिनेयः – ढक् ८. वैनतेयः – ढक्
९. भारतः – अण् १०. ऐरावतः – अण्

१९.४ १. भक्तिमान् / भक्तिमती / भक्तिमत्
२. दोषवान् / दोषवती / दोषवत्
३. दीप्तिमान् / दीप्तिमती / दीप्तिमत्
४. ज्ञानवान् / ज्ञानवती / ज्ञानवत्
५. धीमान् / धीमती / धीमत्
६. प्रतापवान् / प्रतापवती / प्रतापवत्
७. बुद्धिमान् / बुद्धिमती / बुद्धिमत्
८. श्रद्धावान् / श्रद्धावती /श्रद्धावत्
९. हेतुमान् / हेतुमती / हेतुमत्
१०. भगवान् / भगवती / भगवत्

१९.५. १. देही / देहवान् २. रागी / रागवान् ३. भोगी / भोगवान्
४. त्यागी / त्यागवान् ५. मौनी / मौनवान्
६. किरीटी / किरीटिवान् ७. संन्यासी / संन्यासवान्
८. शशी / शशवान् ९. संयमी / संयमवान्

१९.६. १. एकत्वम् / एकता / ऐक्यम्
२. प्रधानत्वम् / प्रधानता / प्राधान्यम्
३. कृपणत्वम् / कृपणता / कार्पण्यम्
४. निष्कर्मत्वम् / निष्कर्मता / नैष्कर्म्यम्
५. क्लीबत्वम् / क्लीबता / क्लैब्यम्
६. त्रिगुणत्वम् / त्रिगुणता / त्रैगुण्यम्
७. दक्षत्वम् / दक्षता / दाक्ष्यम्
८. समत्वम् / समता / साम्यम्
९. स्थिरत्वम् / स्थिरता / स्थैर्यम्
१०. विरागत्वम् / विरागता / वैराग्यम्

## २०. अन्वयरचना

२०.१. १. आसीत् द्रोणः नाम विख्यातः धनुर्वेदाचार्यः।
द्रोणः नाम विख्यातः धनुर्वेदाचार्यः आसीत्।
२. सन्ति वृक्षेषु अनेकानि फलानि मधुराणि
वृक्षेषु अनेकानि मधुराणि फलानि सन्ति।
३. भगवद्गीता अन्तर्भवति भीष्मपर्वणि महाभारतस्थे।
महाभरतस्थे भीष्मपर्वणि भगवद्गीता अन्तः भवति। (अन्तर्भवति)
४. अस्ति संस्कृतभाषा भारतीयभाषणां सर्वासां जननी।
संस्कृतभाषा सर्वासां भारतीयभाषणां जननी अस्ति।
५. उद्याने तस्मिन् विलसन्ति पुष्पाणि सुन्दराणि।
तस्मिन् उद्याने सुन्दराणि पुष्पाणि विलसन्ति।
६. करोमि अहं संस्कृतसेवनं सदा।
अहं सदा संस्कृतसेवनं करोमि।

